अहमेतमुपास' इति । स यो हैतमेवमुपास्ते, जिष्णुर्हवा अपराजिष्णुरन्यतस्त्यजायी भवति ।। ११ ।।

स होवाच बालाकिः, 'य एवैषोऽग्नौ पुरुषः तमेवाहमुपासे इति । तं होवाचाजातशत्रुः, मा मैतस्मिन् संवादयिष्ठाः । विषासहिरिति वा अहमेतमुपासे इति' । स यो हैतमेवमुपास्ते, विषासहिर्हैवैष भवति ।। १२ ।।

स होवाच बालाकिः, 'य एवैषोऽप्सु पुरुषः, तमेवाहमुपास इति । तं होवाचाजातशत्रुः, मा मैतस्मिन् संवादयिष्ठाः । नाम्नस्त्वात्मेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, नाम्नस्त्वात्मा भवति' ।। १३ ।।

इत्यधिदैवतम् । अथाध्यात्मम् ।। १४ ।।

स होवाच बालाकिः, 'य एवैष आदर्शे पुरुषः, तमेवाहमुपास' इति । तं होवाचाजातशत्रुः, मामैतस्मिन् संवादयिष्ठाः । प्रतिरूप इति वा अहमेतमुपास इति । 'स यो हैतमेवमुपास्ते, प्रतिरूपो हैवास्य प्रजा स्वयमाजायते; नाप्रतिरूपः' ।। १५ ।।

स होवाच बालाकिः, 'य एवैष प्रतिश्रुत्कायां पुरुषः, तमेवाहमुपास' इति । तं होवाचाजातशत्रुः, 'मामैतस्मिन् संवादयिष्ठाः, द्वितीयोऽनपगम इति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते, विन्दते द्वितीयाम्; द्वितीयवान् भवति' ।। १६ ।।

स होवाच बालाकिः, 'य एवैष शब्दः पुरुषमन्वेति, तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः, असुरिति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, नो एव स्वयम्, नास्य प्रजा पुरा कालात् संमोहमेति' ।। १७ ।।

स होवाच बालाकिः, 'य एवैष च्छायायां पुरुषः, तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । मृत्युरिति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, नो एव स्वयम्, नास्य प्रजा पुरा कालात् प्रमीयते' ।। १८ ।।

स होवाच बालाकिः, 'य एवैष शारीरः पुरुषः, तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । प्रजापतिरिति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, प्रजायते प्रजया पशुभिः' ।। १९ ।।

स होवाच बालाकिः, 'य एवैष प्राज्ञ आत्मा येनैतत् सुप्तः स्वप्नायाचरति, तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । यमो

राजेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते' ।। २० ।।

स होवाच बालाकिः, 'य एवैष दक्षिणेऽक्षन् पुरुषः तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । नाम्न आत्मा अग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, एतेषां सर्वेषामात्मा भवति' । स होवाच बालाकिः, 'य एवैष सव्येऽक्षन् पुरुषस्तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, एतेषां सर्वेषामात्मा भवति' ।। २१ ।।

ततो ह बालाकिस्तूष्णीमास ।। २२ ।।

तं होवाचाजातशत्रुः, 'एतावन्नु बालाके' इति ।। २३ ।।

एतावद्धीति होवाच बालाकिः ।। २४ ।।

तं होवाचाजातशत्रुः, 'मृषा वै किल मा संवादयिष्ठाः ब्रह्म ते ब्रवाणीति' ।। २५ ।।

स होवाच, 'यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् कर्म, स वै वेदितव्यः' इति ।। २६ ।।

तत उ ह बालाकिः समित्पाणिः प्रतिचक्राम, उपायानीति ।। २७ ।।

तं होवाचाजातशत्रुः, 'प्रतिलोमरूपमेव स्यात् यत् क्षत्रियो ब्राह्मणमुपनयेत् । एहि व्येव त्वा ज्ञापयिष्यामीति' ।। २८ ।।

तं ह पाणावभिपद्य प्रवव्राज ।। २९ ।।

तौ ह सुप्तं पुरुषमीयतुः ।। ३० ।।

तं हाजातशत्रुरामन्त्रयाञ्चक्रे, 'बृहन् पाण्डरवासः सोमराजन्निति' ।। ३१ ।।

स उ ह तूष्णीमेव शिश्ये ।। ३२ ।।

तत उ हैनं यष्ट्या चिक्षेप ।। ३३ ।।

स तत एव समुत्तस्थौ ।। ३४ ।।

तं होवाचाजातशत्रुः, क्वैष एतद्बालाके पुरुषोऽशयिष्ट? क्वैतदभूत्? कुत एतदागादिति ।। ३५ ।।

तदु ह बालाकिर्न विजज्ञौ ।। ३६ ।।

तं होवाचाजातशत्रुः, यत्रैष एतद्बालाके पुरुषोऽशयिष्ट, यत्रैतदभूत्, कुत एतदागात् ।। ३७ ।।

हिता नाम हृदयस्य नाड्यो हृदयात् पुरीततमभिप्रतिष्ठन्ति । यथा (च) सहस्त्रधा केशस्यापि पातः तावदण्व्यः पिङ्गळस्याणिम्ना तिष्ठन्ते शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति । तासु तदा भवति ।। ३८ ।।

यदा सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति । तदैनं वाक् सर्वैः नामभिः सहाप्येति; चक्षुः सर्वैः रूपैः सहाप्येति; श्रोत्रं सर्वैः शब्दैः सहाप्येति; मनःसर्वैः ध्यानैः सहाप्येतीति ।। ३९ ।।

स यदा प्रतिबुध्यते, यथा अग्नेर्विस्फुलिङ्गाः विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते । प्राणेभ्यो देवाः । देवेभ्यो लोकाः ।। ४० ।।

तद्यथा क्षुरः क्षुरधाने अवहितः स्यात्, विश्वम्भरो वा विश्वम्भरकुलाये, एवमेवैष प्राज्ञ आत्मा इदं शरीरमात्मानमनुप्रविष्टः आ लोमभ्यः आ नखेभ्यः ।। ४१ ।।

तमेतमात्मानमेते आत्मानोऽन्ववस्यन्ति ।। ४२ ।।

यथा श्रेष्ठिनं स्वाः ।। ४३ ।।

तद् यथा श्रेष्ठी स्वैर्भुङ्क्ते, यथा श्रेष्ठिनं स्वाः भुञ्जते एवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते । यथा श्रेष्ठी स्वैः, एवं वा एतमात्मानोऽन्ववस्यन्ति ।। ४४ ।।

स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ, तावदेनमसुरा अभिबभूवुः । स यदा विजज्ञौ, अथ हत्वाऽसुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय । सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति, य एवं वेद । य एवं वेद ।। ४५ ।।

।। इति चतुर्थोऽध्यायः ।।

।। कौषीतकिब्राह्मणोपनिषत् समाप्ता ।।



श्रीः

# कौषीतकिब्राह्मणोपनिषत्

## (ऋग्वेदीयोपनिषत्)

### शान्तिपाठः

### ओम्

**वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम्। आविरावि(वी)र्म एधि। वेदस्य म आणी स्थः। श्रुतं मे मा प्रहासीः। अनेनाधीतेनाहोरात्रान् संदधामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद् वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। अवतु वक्तारम्॥**

**॥ ओं शान्तिः शान्तिः शान्तिः ॥**

**मे** - मम **वाग्** - वागिन्द्रियं **मनसि प्रतिष्ठिता** - भवतु। मनसा वक्तव्यतया सङ्कल्पितामेव वाच्यम् उच्चारयतु नापराम्। **मे मनः** - अन्तःकरणं **वाचि** - वागिन्द्रिये **प्रतिष्ठितम्** - भवतु यद्यद् वाक्यजातं विद्याप्रतिपादकमस्ति वागिन्द्रियसमुच्चार्यं तदेव सङ्कल्पयतु नान्यदिति। **आविः**शब्देन स्वप्रकाशरूपं ब्रह्म विवक्षितं तच्च प्रथमं सम्बोधनान्तम्। **हे आविः** - हे ब्रह्मन् **मे** - मह्यम् **आवीरेधि** - आविर्भूतं भव। दीर्घश्छान्दसः। वाङ्मनसे प्रति प्रार्थयते। हे वाङ्मनसे अन्योन्यप्रतिष्ठिते युवां **वेदस्य** - आत्मतत्वप्रतिपादकस्य वेदभागस्योपनिषत्स्वरूपस्य **मे** - मह्यं **आणीः** - आनयनसमर्थे **स्थः** - भवतम्। तादृशं वेदभागं मदर्थमुपस्थापयेत्यर्थः। **मे** - मम सम्बन्धि **श्रुतं** - श्रोत्रेन्द्रियद्वाराऽवगतम् उपनिषदर्थजातं **मा प्रहासीः** - मां न कदाचित् त्यजतु। कदापि तद् विस्मृतिं न गच्छेत् इत्येतत्। **अनेन अधीतेन** - अचिरादेव गुरुमुखादवगतेन आत्मप्रतिपादकवेदभागात्मकेन ग्रन्थेन निरन्तरं समभ्यस्यमानेन **अहोरात्रान्** - अहानि च रात्रयश्चाहोरात्राः तान् सर्वाण्यहानि सर्वा रात्रीश्च **अनुसन्दधामि** - संयोजयामि। रात्रिन्दिवम्

आलस्यादिपरिहारपूर्वकं गुरुमुखाधीत आत्मतत्त्वावबोधकग्रन्थाभ्यासपरो भवामि इत्येतत्। **ऋतं वदिष्यामि -** परमार्थभूतमेव आचार्यमुखाधीतग्रन्थार्थं व्याख्यास्यामि न विपरीतार्थम्। **सत्यं वदिष्यामि -** मनसा सम्यगालोच्य सत्यभूतामेव वाचं निगदिष्यामि नासत्यभूताम्। ऋतपदेन मानसं सत्यं विवक्षितम्। सत्यपदेन तु वाचिकं सत्यमुच्यत इति विवेकः। **तन्मामवतु। तद्** ब्रह्म प्रज्ञानरूपं **मां -** शिष्यं, **अवतु -** गुरुमुखाधीतवस्तुनः सम्यग्बोधप्रदानेन परिपालयतु। **तद्वक्तारमवतु।** तद्विज्ञानात्मकं ब्रह्म समुपास्यमानमात्मतत्त्वमिति यावत्। **वक्तारं -** मदीयमाचार्यं **अवतु -** शिष्यजिज्ञासाशमनसमर्थबोधजनकशक्तिप्रदानेन पालयतु। एतत् प्रार्थनाद्वयं विद्याग्रहणपूर्वकालाभिप्रायेण। **अवतु माम्। अवतु वक्तारमिति -** पदव्यत्यासेन क्रियमाणं प्रार्थनाद्वयन्तु विद्याग्रहणोत्तरकालाभिप्रायेण बोध्यम्। **अवतु माम्। अवतु -** स्वतन्त्रात्मकभ्रमादिनिवृत्या समुत्पन्नपरमात्मस्वरूपयथार्थाऽवबोधपरिरक्षणेन च परिपालयतु **मां -** शिष्यम्। **अवतु वक्तारम्। अवतु -** योग्यशिष्यलाभप्रयुक्त-विद्यासम्प्रदायप्रवर्तनजन्य- स्वात्मतोषरूपफलप्रदानेन परिपोषयतु। **वक्तारम्** मदीयाचार्यम्। **अवतु वक्तारम् -** इत्यस्य पुनः पाठोऽध्यायसमाप्तिसूचनाय। **ओं शान्तिरिति -** वाक्ये ओंकारपाठेन परमात्मनः स्मरणात् स्वरूपतोऽर्थतश्च ग्रन्थान्ते समाचरणीयं मङ्गलमाचरितम्। तादृशमङ्गलाचरणस्यापि शिष्टाचारपरिप्राप्तत्वात् तदाचरणं पश्चाद्भाविभिरपि शिष्याचार्यैः करणीयमित्येतदर्थो ज्ञाप्यते। शान्तिशब्दस्य त्रिधापाठस्तु आध्यात्मिकाधिदैविकाधिभौतिकरूपाणां त्रिविधतापानां शमनं भवतु इत्यभिप्रायेण कृतः॥

* * *

# कौषीतकिब्राह्मणोपनिषत्

## प्रथमोऽध्यायः

**हरिः ओम्। चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे ॥ १ ॥**

### प्रकाशिका

**श्रीमद्रङ्गरामानुजमुनीन्द्रानुगृहीता**

**[मङ्गलाचरणम्]**

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम्॥

**[आचार्यवन्दनम्]**

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि।
कौषीतकि(की)श्रुतिव्याख्यां करवाणि यथामति॥

अर्चिरादिगति तत्प्राप्यदेशविशेष - तद्विशिष्टब्रह्मानुभवप्रकारोपदेशाय आख्यायिकेयमारभ्यते[१] - **चित्रो ह......वव्रे**। नाम्ना चित्रः गार्ग्यस्यापत्यं **गार्ग्यायणिः** क्षत्रियः आरुणिं गौतमं याजनाय प्रार्थितवान् इत्यर्थः॥

**स ह पुत्रं श्वेतकेतुं प्रजिघाय, याजयेति ॥ २ ॥**

स तु श्वेतकेतुनामानं पुत्रं, त्वमेव गत्वा याजयेति प्राहिणोत् - प्रेषितवान् इत्यर्थः॥

**तं हासीनं पप्रच्छ, गौतमस्य पुत्र! अस्ति संवृतं लोके यस्मिन् मा धास्यस्यन्यमहो वाऽध्वा तस्य यस्मिन्? लोके धास्यसीति ॥ ३ ॥**

---

१. अस्यामुपनिषदि प्रथमेऽध्याये पर्यङ्कविद्या प्रस्तूयते। इयं विद्या परमपदे पर्यङ्के समुपासीनस्य भगवतः वासुदेवस्य ध्यानरूपा।

हे गौतमपुत्र ! यस्मिन् लोके मां वा अन्यं वा यज्ञाद्यनुष्ठापनेन स्थापयिष्यसि, तस्मिन् लोके रहस्यमुपदेश्यं किञ्चिदस्ति किम् ? यस्मिन् लोके मां स्थापयिष्यसि, स्थापयितुमिच्छसि, तस्याध्वा वा कश्चिदस्ति किमित्यर्थः ॥

**स होवाच, नाहमेतत् वेद, हन्ताचार्यं पृच्छानीति । स ह पितरमासाद्य पप्रच्छ ॥ ४ ॥**

स्पष्टोऽर्थः ॥

**इति ह माऽप्राक्षीत् ; कथं प्रतिब्रवाणीति ॥ ५ ॥**

इतीत्येतत् उक्तार्थप्रकारवचनम् । एवंप्रकारेण मां पृष्टवान् ; कथमस्योत्तरं ददामीति ॥

**स होवाच, अहमप्येतन्न वेद । सदस्येव वयं स्वाध्यायमधीत्य हवामहे यन्नः परे ददति, एह्युभौ गमिष्याव इति ॥ ६ ॥**

**स ह...... गमिष्याव इति** अहमपि न जाने । गुरुं रहसि गत्वा रहस्यान् अर्थान् पृष्ट्वा सदस्येव स्वाध्यायमधीत्य **परे** यजमानाय यत् द्रव्यं होतव्यमिति प्रयच्छन्ति, तत् जुहुमः । अस्माकं रहस्यार्थपर्यन्तज्ञानं नास्ति । त्वमप्यागच्छ । आवाभ्यां गत्वा स प्रष्टव्य इत्यर्थः ॥

**स ह समित्पाणिश्चित्रं गार्ग्यायणिंप्रतिचक्रम, उपायानीति ॥ ७ ॥**

समिद्भारहस्तस्सन् चित्रनाम्नः क्षत्रियस्य समीपे, शिष्यस्सन् उपगच्छामीति प्रववृते ॥

**तं होवाच - ब्रह्मार्घ्योऽसि गौतम ! यो न मानमुपागाः । एहि व्येव त्वा ज्ञापयिष्यामीति ॥ ८ ॥**

**यस्त्वमभिमान नोपागाः** - त्यक्ताभिमान एव सन् शिष्योऽहमित्यागतोऽसि, स त्वं ब्रह्मार्घ्योऽसि । ब्रह्मत्वेन - ब्राह्मणत्वेन **अर्घ्योऽसि** - पूज्योऽसि । ब्राह्मणस्त्वं क्षत्रियेण मया उपनीय शिष्यभावं प्रापयितुमयोग्यः । तूष्णीमेवाऽऽयाहि, त्वां ब्रह्म विज्ञापयिष्यामि इति ॥

**स होवाच - ये वै के चास्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति ॥ ९ ॥**

**स ह...... गच्छन्तीति ।** ये केचन इष्टापूर्तादिकारिणः विद्वांसश्च, ते सर्वे चन्द्रमसं गच्छन्तीत्यर्थः । इयांस्तु विशेषः - इष्टादिकारिणस्तु धूमरात्र्यपरपक्षदक्षिणायनपितृलोकाकाशक्रमेण चन्द्रमसमायान्ति । विद्वांसस्तु अर्चिर्दिनपूर्वपक्षोदगयनसंवत्सरवायुलोकादित्यक्रमेण चन्द्रमसमुपयान्तीति ।

इदञ्च वाक्यं तृतीयाध्याये वैराग्यपादे चिन्तितम् । तत्र हि - *अनिष्टादिकारिणामपि च श्रुतम् ।* (ब्र.सू. ३-१-१२) *ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती*त्यविशेषश्रवणात् इष्टादिकारिणामिव अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्त्येवेत्यर्थः । तर्हि सुकृतकारिणां दुष्कृतकारिणाञ्च चन्द्रप्राप्तिसत्त्वे, को विशेष इत्यत्राह *संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्* (ब्र.सू. ३-१-१३) तुशब्दः शङ्कां व्यावर्तयति । संयमने - यमशासने सति इतरेषां अनिष्टादिकारिणां यमयातनाः अनुभूय चन्द्रारोहावरोहौ । *अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे* (कठ.उ. २-६) इति [1]अनिष्टादिकारिणां[1] यमवश्यतादर्शनात् । *स्मरन्ति च ।* (ब्र.सू. ३-१-१४) *सर्वे चैते वशं यान्ति यमस्य भगवन् किल* (वि.पु. ३-५-७) इति यमवश्यतास्मरणात् । *अपि सप्त ।* (ब्र.सू. ३-१-१५) पापकृतां गन्तव्यत्वेन रौरवादीन् सप्त नरकानपि स्मरन्ति । ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिः ? तत्राह - *तत्रापि तद्व्यापारादविरोधः ।* (ब्र.सू. ३-१-१६) तेष्वपि सप्तसु यमाज्ञयैव गमनादविरोधः । अतः अनिष्टादिकारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभूय पश्चात् चन्द्रारोहावरोहौ स्तः ।

इति प्राप्ते उच्यते - *विद्याकर्मणोरिति तु प्रकृतत्वात् ।* (ब्र.सू. ३-१-१७) तु शब्दः शङ्कानिवृत्त्यर्थः । देवयानपितृयाणे हि फलभूते विद्याकर्मणोरित्यवसीयते । *तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति, अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति* (छां.उ. ५-१०-१-३) इति विद्याकर्मणी प्रकृत्य हि देवयानपितृयाणे आम्नायेते । अतो विद्याकर्मविधुरेष्वनिष्टादिकारिषु देवयानपितृयाणासंभवात् न चन्द्रप्राप्तिः । *ये वै के चास्माल्लोकात् प्रयन्ति* इति वचनम् इष्टादिकारिसर्वविषयं नेतव्यम् ।

नन्वनिष्टादिकारिणां चन्द्रप्राप्त्यभावे पञ्चमाहुत्यसंभवात् शरीरारम्भ एव नोपपद्यते । तत्राह *न तृतीये तथोपलब्धेः ।* (ब्र.सू. ३-१-१८) *तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्व [2]इत्येतत्[2] तृतीयं स्थानम्* (छां.उ. ५-१०-८) इति तृतीयस्थानशब्दितानामनिष्टादिकारिणां क्षुद्रजन्तूनां न पञ्चमाहुत्यपेक्षा । तथा ह्युपलभ्यते, *तेनासौ लोको न संपूर्यते* (छां.उ. ५-१०-८) इति । तृतीयस्थानेन हि असौ चन्द्रलोको न प्राप्यत इति हि तस्यार्थः । *स्मर्यतेऽपि च लोके ।* (ब्र.सू. ३-१-१९) केषाञ्चित् पुण्यकर्मणामपि द्रौपदीधृष्टद्युम्नप्रभृतीनां पञ्चमाहुत्यनपेक्षयैव देहारम्भो भारतादिषु स्मर्यते । *दर्शनाच्च ।* (ब्र.सू. ३-१-२०) *तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति [3]आण्डजं[3] जीवजं उद्भिज्जम् ।* (छां.उ. ६-३-१) इति

---

1. अनिष्टादिकारिणां - दुष्कृतकारिणां इति वचनं - क । 2. इत्येवं - क । 3. अण्डजं - क ।

श्रुत्युपात्ताण्डजजीवजोद्भिज्जलक्षणभूतजातिमध्ये केषाञ्चिदुद्भिज्जानां वृक्षादीनां पञ्चमाहुत्यनपेक्षा लोके दृष्टा। ननु, *तेषां खल्वेषां भूतानां त्रीण्येव* इत्यवधारणं नोपपद्यते। स्वेदजानामत्रानुपात्तत्वात्। तत्राह - *तृतीयशब्दावरोधः संशोकजस्य ।* (ब्र.सू. ३-१-२१) संशोकजस्य - स्वेदजस्यापि *[1]आण्डजं[1] उद्भिज्जम्* इत्यत्र तृतीयेनोद्भिज्जशब्देनावरोधः - संग्रहो विद्यत इत्यर्थः। अतः केवलपापकर्मणां चन्द्रप्राप्तिर्न भवतीति स्थितम्। प्रकृतमनुसरामः ॥

**तेषां प्राणैः पूर्वपक्ष आप्यायते । तानपरपक्षेण प्रजनयति ॥ १० ॥**

**तेषाम्** - इष्टादिकारिणां **प्राणैः** - इन्द्रियैः मनोहस्तादीन्द्रियजन्यदानहोमादिभिः पूर्वपक्षे चन्द्रः **आप्यायते** - संवर्ध्यते। *ओ प्यायी वृद्धौ* (धा.पा. ४८८) इति हि धातुः। *अग्नौ हुतञ्च दत्तञ्च सर्वं सोमगतं भवेत्* इति स्मरणात्। **तान्** - इष्टादिकारिणः **अपरपक्षेण** - पञ्चदशभिर्दिनैः **प्रजनयति** - ग्राहयति। स्वावयवभूताः कलाः आशयति इत्यर्थः। कलाभिस्तर्पणं करोतीति यावत्। *पुरोवातो गाः प्रजनयति* इत्यत्र *प्रजनयती*त्यस्य गन्धं ग्राहयतीत्यर्थपरत्वदर्शनाद् इहापि प्रजनयतीत्यस्य ग्राहयतीत्यर्थ उपपद्यते। **अपरपक्षेनेति** पाठे णत्वाभावश्छान्दसः ॥

**एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमाः ॥ ११ ॥**

**स्वर्गस्य लोकस्य** - भगवल्लोकस्य **द्वारं** दौवारिकप्राय इत्यर्थः ॥

[जीवस्य नानाविधयोनिषु जननम्]

**तं यः प्रत्याह, तमतिसृजते। य एनं न प्रत्याह, तमिह वृष्टिर्भूत्वा वर्षति। स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान् वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते ॥ १२ ॥**

**य एनं न...... प्रत्याजायते।** चन्द्रः स्वप्रश्नस्य यः सदुत्तरं प्रयच्छति, **तमतिसृजते** - भगवल्लोकगमनाय तमनुजानाति। यस्तु प्रतिवक्तुमशक्तः, **तम्** अविद्वांसम् , *यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुम्। वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति॥ अभ्रं भूत्वा मेघो भवति। मेघो भूत्वा प्रवर्षति। त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते।* (छां.उ. ५-१०-५,६) तद्य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। *[2]य[2] इह कपूयचरणा अभ्याशो ह यत् ते कपूयां योनिमापद्येरन् श्वयोनिं वा*

---

1. आण्डजं जीवजं - क। 2. तद्य - क।

*सूकरयोनिं वा चण्डालयोनिं वा ।* (छां.उ. ५-१०-७) इति श्रुत्यर्थोऽत्रानुसन्धेयः । **परस्वान् -** पशुविशेषः । एतेषु स्थानेषु जायते ॥

**यथाकर्म यथाविद्यं तमागतं पृच्छति, कोऽसीति । तं प्रतिब्रूयात् ॥ १३ ॥**

इष्टादिकर्मानुसारेण वा ब्रह्मविद्यानुसारेण वा आगतं पुमांसं पृच्छति **कोऽसीति । तं प्रतिब्रूयात् ।** तं वक्ष्यमाणप्रकारेण यः प्रतिब्रूयात् , तमतिसृजत इत्युत्तरेणान्वयः ॥

**[प्रकृतिविविक्तात्मस्वरूपम् ]**

**विचक्षणादृतवो रेत आभृतं पञ्चदशात् प्रसूतात् पित्र्यावतस्तस्मात् ॥ १४ ॥**

प्रतिवचनप्रकारमाह **विचक्षणात्...... तस्मात् ।** मासादिकालपरिच्छेदकत्वात् चन्द्रस्य **ऋतु**शब्देन संबोधनम् । एकस्मिन् औपचारिको बहुवचनप्रयोगः । दिवसपूर्वपक्षोत्तरायणादिलक्षण-कालाभिमानिदेवतासाहित्याभिप्रायेण वा **ऋतव** इति बहुवचनप्रयोगः । हे **ऋतवः ।** कालप्रवर्तकाः इत्यर्थः । **पित्र्यावतः** - पितुः कर्म पित्र्यं निषेकादि । तद्वान् । छान्दसो मतौ दीर्घः निषेकादिकर्तुः विचक्षणात् तस्मात् **प्रसूतात् ।** प्रसूतम् उत्पन्नम् । *सुपां सुलुक्......* (पा.सू. ७-१-३९) इत्यादिना आदादेशः । पञ्चदशम् - पञ्च दशाः - अवस्थाः यस्य तत् पञ्चदशम् । श्रद्धासोमवृष्ट्यन्नरेतोरूपावस्थापञ्चकयुक्तम् **आभृतं** - शोणितेन संभृतं रेतोऽस्मि । रेतश्शरीरकः अहमित्यर्थः । अनेन पञ्चाग्निविद्याप्रकारोपन्यासात् स्वस्य प्रकृतिविविक्तात्मस्वरूपमुपन्यस्तं भवति ॥

**पुंसि कर्तरि मेरयध्वम् । पुंसा कर्त्रा मातरि मा निषिक्तम् ॥ १५ ॥**

हे ऋतवः ! यूयमितः परं निषेककर्तरि पुंसि रेतोरूपतया अवस्थानाय **मेरयध्वम् -** मा प्रेषयत । प्रेषणं मा कुरुत इत्यर्थः । उत्तरत्र मा इत्यस्य अत्राप्यनुषङ्गः । पुंसा निषेककर्त्रा मम शरीरपरिग्रहाय (मातरि मा निषिक्तम् ) निषेकं मा कुरुत । छान्दसः शपो लुक् ॥

**स जायमुपजायमानो द्वादशत्रयोदशोपमासः ॥ १६ ॥**

सोऽहं **जायं** - जनित्वा - आभीक्ष्ण्ये णमुल्, गर्भे गर्भे जनित्वा जनित्वा **उपजायमानः** - गर्भात् निर्गच्छन् द्वादश त्रयोदशो वा उपमासः अन्तिममासो यस्य सः **द्वादशत्रयोदशोपमासः ।** यद्यपि

मनुष्याणां गर्भे दशैव मासाः, अथापि योनिविशेषेषु द्वादशत्रयोदशमासपर्यन्तस्थितिरस्तीति तथोक्तम्। द्वादश वा त्रयोदश वा मासान् गर्भे उषित्वेत्यर्थः ॥

**द्वादशत्रयोदशेन पित्राऽऽसं तद्विदेऽहं प्रति तद्विदेऽहम् ॥ १७ ॥**

अहं द्वादशेन वा त्रयोदशेन वा मासेन पित्रा **आसं** - प्रादुरासम्। पितृशब्दः मातुरप्युपलक्षकः। **तद्विदे प्रति तद्विदे।** अत्र तच्छब्दः पूर्वोक्तरेतःपरामर्शी। **तद्विदे** - रेतस्सिचे। **तद्विदे प्रति** - प्रतिरेतस्सिक् - पुरुषमित्यर्थः। चतुर्थी तादर्थ्यार्था। तेषां पितृणां शेषभूत एवासमित्यर्थः ॥

**तन्मा ऋतवो मर्त्यव आभरध्वम् ॥ १८ ॥**

हे **ऋतव**! इति पूर्ववत् संबोधनम्। **तत्** - तस्मात् कारणात् **मर्त्यवे** - मृत्यवे जननमरणलक्षणसंसाराय **मा आभरध्वम्** - इतः परं मा समर्पयत ॥

**तेन सत्येन तपसर्तुरस्म्यार्तवोऽस्मि कोऽस्मि त्वमस्मीति ॥ १९ ॥**

तत्र हेतुमाह **तेन सत्येन......त्वमस्मीति।** *तस्मान्न्यासमेषां तपसामतिरिक्तमाहुरिति* श्रुतेः तच्छरणवरणलक्षणेन तपसा प्रसन्नेन तेन **सत्येन** - परमात्मना अनुगृहीतस्सन् **ऋतुरस्मि** - मासर्तुसंवत्सरयुगात्मककालरूपोऽहमस्मि। **आर्तवोऽस्मि** - तत्तत्कालवर्तिपदार्थरूपोऽप्यहमस्मि। **कोऽस्मि** - चतुर्मुखोऽप्यहमस्मि। **त्वमस्मि** - त्वमप्यहमेवास्मि। अत्र **अहं**शब्दः, *अहं मनुरभवं सूर्यश्च* (ऋग्वेद.सं. ४-२६-१) इति वामदेववाक्यवत्, *तं मामायुरमृतमित्युपास्स्व* इति इन्द्रवाक्यवच्च स्वात्मभूतपरमात्मपरः। साक्षात्कृतसर्वैकात्म्योऽहमस्मीत्यर्थः ॥

**तमतिसृजते ॥ २० ॥**

**तमतिसृजते** - एवं यः प्रतिब्रूयात्, तं ब्रह्मवित्त्वेन ब्रह्मलोकगमनार्हतां ज्ञात्वा गमनाय अनुजानातीत्यर्थः ॥

[ब्रह्मविदः अर्चिरादिगतिवर्णनम्]

**स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् ॥ २१ ॥**

एवं ब्रह्मविच्चन्द्रमस्संवादप्रकारं प्रदर्श्य आदित आरभ्य अर्चिरादिगतिक्रमम् उपदिशति । **सः** - ब्रह्मवित् देहवियोगकाल एव सुकृतदुष्कृते विधूय देवयानमार्गं **आपद्य** - अवलम्ब्य अग्निलोकमागच्छति । *तेऽर्चिषमभिसंभवन्ति* (छां.उ. ५-१०-१) इति अर्चिश्शब्दितस्याग्नेः देवयानमार्गप्रथमपर्वत्वश्रवणात् प्रथमतः अग्निलोकप्राप्तिरुपपन्ना । **स वायुलोकम्** - यद्यप्यत्राग्निलोकानन्तरं वायुलोकं श्रूयते, तथापि श्रुत्यन्तरे, *अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षण्मासानुदङ् आदित्य एति मासेभ्यो देवलोकम्* (छां.उ. ४-१५-५) इति देवलोकनिर्दिष्टस्य वायुलोकस्य उदगयनादूर्ध्वं श्रवणात् उदगयनादूर्ध्वमेव वायुलोको निवेश्यः । तत्राप्युदगयानादूर्ध्वं छान्दोग्ये, *मासेभ्यः संवत्सरम्* इति श्रवणात् , अधिककालानां न्यूनकालादूर्ध्वं निवेशस्य, *अह्न आपूर्यमाणपक्षम् आपूर्यमाणपक्षात् यान् षण्मासानुदङ् आदित्य एति* इत्यत्र दृष्टत्वात् उदगयनापेक्षया अधिककालस्य संवत्सरस्य तदूर्ध्वनिवेशः सिद्धः ।

**स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोक**मितीदं वाक्यं अर्चिरादिपादे चिन्तितम् । *संवत्सरात् आदित्यमादित्यात् चन्द्रमसम्* इति छान्दोग्ये, *यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुलोकमागच्छति । स तत्र विजिहीते, यथा रथचक्रस्य रवम् । तेन स ऊर्ध्वमाक्रमते । स आदित्यम् आगच्छति । तस्मै स तत्र विजिहीते यथा डम्बरस्य खम् । तेन स ऊर्ध्वमाक्रमते । स चन्द्रमसमागच्छति* (बृ.उ. ७-१०-१) इति बृहदारण्यके च श्रुतत्वात् संवत्सरादूर्ध्वं चन्द्रमसः प्रागादित्यस्य निवेशः सिद्धः । तत्र च वरुणेन्द्रप्रजापतीनामपि पठितानां पाठार्थवत्त्वाय क्वचिन्निवेशे कर्तव्ये, वायुलोकं वरुणलोकमिति पाठक्रमानुसारेण वायोरूर्ध्वं वरुणो निवेशितव्यः । इन्द्रप्रजापती अपि तदनन्तरं निवेशयितव्यौ । न च, आदित्यलोकम् , इन्द्रलोकं प्रजापतिलोकमिति पाठक्रमादादित्यादूर्ध्वं चन्द्रात् प्रागेव निवेशोऽस्त्विति वाच्यम् - आदित्याच्चन्द्रमसम् इति आदित्यादूर्ध्वं चन्द्रस्य श्रवणेन तत्क्रमबाधप्रसङ्गात् । न च चन्द्रादूर्ध्वं तयोर्निवेशोऽस्त्विति वाच्यम् - *चन्द्रमसो विद्युतम्* इति श्रुतिक्रमबाधप्रसङ्गात् ।

ननु *देवलोकादादित्यम्* इति देवलोकशब्दितवायोः आदित्यस्य च क्रमस्य श्रुतत्वात् तत्रेन्द्रप्रजापत्योः निवेशे तत्क्रमभङ्गः स्यादिति चेन्न - वाय्वादित्ययोः अन्तराले वरुणस्य निवेशनीयतया तेनैव वाय्वादित्ययोरानन्तर्यस्य भग्नतया तत्रैवेन्द्रप्रजापत्योरपि निवेशः । अतश्च वरुणेन्द्रप्रजापतीनां त्रयाणामपि वाय्वादित्ययोरन्तराल एव निवेशोऽस्त्विति प्राप्ते -

उच्यते - *तटितोऽधि वरुणः संबन्धात्* । (ब्र.सू. ४-३-३) तटित ऊर्ध्वं वरुणस्य निवेशः । कुतः ? संबन्धात् । विद्युद्वरुणयोः द्वयोरपि मेघोदरवर्तित्वरूपसंबन्धसत्त्वात् विद्युत ऊर्ध्वं वरुणस्य निवेशः । ततः परस्तात् इन्द्रप्रजापत्योर्निवेशः । तथा हि सति, *देवलोकादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्* इति निबद्धोऽपि क्रमो न बाधितो भवति । न चैवं विद्युत ऊर्ध्वं वरुणेन्द्रप्रजापतीनां निवेशे तेषामेव ब्रह्मगमयितृत्वेन, *तत्पुरुषोऽमानवः स एनान्* ब्रह्म गमयति (छां.उ. ४-१५-५,६) इति वैद्युतपुरुषस्य गमयितृत्वं श्रुतं विरुद्ध्येति वाच्यम् - वरुणेन्द्रप्रजापतीनाम् गमयितृत्वेऽपि वैद्युतपुरुषस्याप्यनुग्राहकतया गमयितृत्वसंभवादिति स्थितम् । प्रकृतमनुसरामः ॥

### [ब्रह्मलोकवर्णनम् ]

### [1]तस्य हवा एतस्य ब्रह्मलोकस्यारो ह्रदः मुहूर्ता यष्टिहाः[1] ॥ २२ ॥

**तस्य -** ब्रह्मलोकस्य समीपे अरसंज्ञको ह्रदः। छान्दोग्ये, *अरश्च ण्यश्चार्णवौ ब्रह्मलोके ऐरम्मदीयं सरः* (छां.उ. ८-५-३) इति सरस्त्रयमुक्तम्। ततः परस्तादविदूरे मुहूर्तसंज्ञकाः यष्टिहाः। यष्टिभिः अब्रह्मविदो गन्तॄन् घ्नन्तीति यष्टिहाः॥

### विरजा नदी ॥ २३ ॥

**विजरेति** संज्ञावती नदी। विरजा नदीत्यपि पाठोऽस्ति। जरारजोविरोधित्वात् विजरा विरजेत्युच्यते॥

### तिल्यो वृक्षः ॥ २४ ॥

ततोऽविदूरे **तिल्यसंज्ञको** वृक्षः। छान्दोग्ये, *तदश्वत्थः सोमसवनः* (छां.उ. ८-५-३) इति सोमसवन संज्ञकोऽश्वत्थो वृक्ष उक्तः॥

### सालज्यं संस्थानं ॥ २५ ॥

सालज्यनामकं संस्थानं - स्थानीयम्। *स्थानीयं निगमोऽन्यत्तु यन्मूलनगराद्बहिः* (अ.को. २-२-१) इत्यमरः। सालेषु प्राकारेषु ज्या युद्धसाधनं यस्य तत् सालज्यम्॥

### अपराजितमायतनम् ॥ २६ ॥

*अपराजिता पूः ब्रह्मणः* (छां.उ. ८-५-७) इति श्रवणात् अपराजितसंज्ञकमायतनं पुरमित्यर्थः। अब्रह्मविद्भिर्न जीयत इत्यपराजितम्॥

### इन्द्रप्रजापती द्वारगोपौ ॥ २७ ॥

इन्द्रप्रजापतिसंज्ञकौ पट्टणद्वारपालकौ॥

### विभुप्रमितम् ॥ २८ ॥

---

1. **तस्यारो ह्रदो मुहूर्ता यष्टिहाः** - क।

अत्र मण्टपमिति शेषः । विभुत्वेन अतिविस्तृतत्वेन प्रमितं हिरण्मयमण्टपमित्यर्थः । *प्रभुविमितं हिरण्मयम्* (छां.उ. ८-५-७) इति छान्दोग्योक्तेः ॥

**विचक्षणा आसन्दी ॥ २९ ॥**

विचक्षणसंज्ञिका **आसन्दी** - धर्मादिपीठम् इत्यर्थः ॥

**अमितौजाः पर्यङ्कः ॥ ३० ॥**

अमितौजा नाम योगपर्यङ्कः ॥

**प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्यपचयतः ॥ ३१ ॥**

मनोधिष्ठात्री नाम्ना प्रिया च, चक्षुरधिष्ठात्री नाम्ना प्रतिरूपा च पुष्पाणि अपचयतः कुसुमानि देव्यौ ॥

**यतो वै च जगत्यम्बाश्चाम्बावयवाश्चाप्सरसोऽम्बया नद्यः । तमित्थंवित् आगच्छति ॥ ३२ ॥**

तादृशब्रह्मलोकं एतादृशस्वरूपविदागच्छति ॥

**तं ब्रह्माह - अभिधावत मम यशसा विरजां (विजरां) वाऽयं नदीं प्रापत् । न वाऽयं जिगीष्यतीति ॥ ३३ ॥**

यूयं तं ब्रह्मविदमागच्छन्तं **अभिधावत** - अभिगच्छत - प्रत्युत्थानं कुरुत । मम यशसा ममानुग्रहेणायं ब्रह्मवित् **विरजां नदीं** - विरजानदीसमीपं प्राप्तवान् । विरजानदीसंबन्धात् इतः परं विरजामेष्यतीति परमात्मा अप्सरसः प्रतिवदति इत्यर्थः ॥

**तं पञ्च शतान्यप्सरसां प्रतिधावन्ति, शतं मालाहस्ताः, शतमञ्जनहस्ताः, शतं चूर्णहस्ताः, शतं वासोहस्ताः, शतं फणहस्ताः, तं ब्रह्मालङ्कारेणालंकुर्वन्ति । स ब्रह्मालङ्कारेणालंकृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति ॥ ३४ ॥**

**फणः** - भूषणम्। **ब्रह्मैवाभिप्रैति** - ब्रह्मदर्शन उत्सुक एव भवति। नाप्सरस्संभाषणवासोभूषणादिषु सादर इत्यर्थः। शिष्टं स्पष्टम्॥

**स आगच्छत्यरं ह्रदम्। तन्मनसाऽत्येति। तमृत्वा संप्रतिविदो मज्जन्ति॥ ३५॥**

**तमृत्वा** - तं ह्रदं प्राप्य **संप्रति** - इदानीमपि **विदः** - ज्ञानिनः **मज्जन्ति** - स्नान्तीत्यर्थः॥

**स आगच्छति मुहूर्तान् यष्टिहान्। तेऽस्मादपद्रवन्ति॥ ३६॥**

तमनिरुन्धानाः दूरतो गच्छन्तीत्यर्थः॥

**स आगच्छति विरजां नदीम्। तां मनसैवात्येति। तत् सुकृतदुष्कृते धूनुते। तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति ; अप्रिया दुष्कृतम्॥ ३७॥**

**तत्** - तदैवेत्यर्थः। अयञ्च तच्छब्दः नाव्यवहितविरजानद्यतिक्रमणकालवाची। अपि तु, *ये वै के चास्माल्लोकात् प्रयन्ति* इति वाक्यनिर्दिष्टप्रयाणकालवाची। इदञ्च वाक्यं गुणोपसंहारपादे चिन्तितम् - कौषीतकिनामुपनिषदि, *विरजां नदीं मनसा अत्येति तत् सुकृतदुष्कृते धूनुते* इति विरजानद्यतिक्रमणहेतुतया तदनन्तरभावि सुकृतदुष्कृतधूननश्रवणात्, *अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि* (छां.उ. ८-१३-१) इति, *तस्य पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्* (शाट्यायनीयम्) इति च श्रुत्या देहवियोगसमकालतया सुकृतदुष्कृतहानसंक्रमणयोः श्रवणात् कर्मैकदेशस्य देहवियोगकाले नाशः, शेषस्य विरजानद्यतिक्रमणानन्तरं नाश इति प्राप्ते उच्यते - *सांपराये तर्तव्याभावात् तथा ह्यन्ये।* (ब्र.सू. ३-३-२७) सांपराये - देहापक्रमणकाल एव सुकृतदुष्कृतविनाशः। ततः ऊर्ध्वं तत्साध्यस्य तर्तव्यस्य - प्राप्तव्यस्य सुखदुःखानुभवरूपफलस्य अभावात्। तथा ह्यन्ये शाखिनः ब्रह्मविदः शरीरपरित्यागानन्तरं ब्रह्मप्राप्तिव्यतिरेकेण कर्मफलानुभवाभावमधीयते, *तस्य तावदेव चिरम्, यावन्न विमोक्ष्येऽथ संपत्स्ये* (छां.उ.६-१४-२) इति। *छन्दत उभयाविरोधात्।* (ब्र.सू. ३-३-२८)। अर्थस्वाभाव्यात् देहवियोगकाल एव कर्मनाश इति निश्चिते तयोरविरोधाय, *विरजां नदीं मनसा अत्येति तत् सुकृतदुष्कृते धूनुते* इत्यस्य वाक्यस्य तच्छब्दस्य छन्दतः यथेष्टमन्वयोऽङ्गीकर्तव्यः। *गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः।* (ब्र.सू. ३-३-२९) सुकृतदुष्कृतैकदेशस्य देहवियोगकाले हानिः, शेषस्याध्वनि हानिरित्यभ्युपगम एव देवयानगतिश्रुतेरर्थवत्त्वम्। इतरथा हि देहवियोगकाल एव सर्वकर्मक्षये सूक्ष्मशरीरस्यापि नाशेन केवलस्य आत्मनो देवयानासंभवेन देवयानश्रुतेरर्थशून्यत्वमेव स्यादित्यर्थः। उत्तरमाह - *उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्* (ब्र.सू.३-३-३०)। देहोत्क्रान्तिकाल एव सर्वकर्मक्षय उपपन्नः। क्षीणकर्मणोऽपि विदुषो विद्यामाहात्म्यात् सूक्ष्मदेहानुवृत्तिसंभवेन देवयानगमनसंभवात्। यथा लोके सस्यादिसमृद्ध्यर्थ्यमारब्धेऽपि

तटाकादिके, सस्यादिसमृद्धीच्छायां तटाकादिनिर्माणहेतुभूतायां नष्टायामपि, पानीयपानाद्यर्थतया तटाकादिः स्थाप्यते, एवं कर्महेतुकसूक्ष्मदेहो नष्टेऽपि कर्मणि विद्याफलाय स्थाप्यत इत्यर्थः । ननु देहवियोगकाल एव कर्मनाशे ब्रह्मविदां वसिष्ठावान्तरतपःप्रभृतीनां पुत्रजन्मादिनिमित्तसुखदुःखानुभवो न स्यादित्यत्राह - *यावदधिकारमवस्थितिराधिकारिकाणाम्* (ब्र.सू. ३-३-३१) । आधिकारिकाणां वसिष्ठादीनां यावदधिकारं कर्मावतिष्ठते ; प्रारब्धस्य भोगैकनाश्यत्वादिति स्थितिः । प्रकृतमनुसरामः । **तस्य...... दुष्कृतम् ।** ब्रह्मविदः इष्टानिष्टफलदित्सालक्षणपरमात्मप्रीत्यप्रीतिरूप सुकृतदुकृतयोश्चतस्रोऽवस्थाः श्रुताः - विनाशः अश्लेषः धूननम् उपायनञ्चेति । विनाशः पूर्वाघविषयः । कर्मफलदित्साप्रतिबन्धलक्षणोऽश्लेष उत्तराघविषयः । तौ च - यद्ययमुपासकः प्रक्रान्तमुपासनं समापयेत् , पूर्वोत्तरयोः कर्मणोः फलं न दास्यामीत्येवं भगवत्संकल्परूपौ । उत्तरपूर्वाघाश्लेषविनाशौ दर्शनसमानाकारज्ञानारम्भ एव *तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्* (ब्र.सू. ४-१-१३) इति सूत्रोक्तन्यायेन भवतः । अन्तिमप्रत्ययपर्यन्तोपासननिवृत्त्यनन्तरम् , विनष्टाश्लिष्टयोरेव कर्मणोः, फलं नैव दास्यामि इति संकल्परूपं विधूननं देहवियोगकाले भवति ; तस्मिन्नेव समये एतदीयप्रियाप्रियजनेषु एतदीयसुकृतदुष्कृतानुरूपेष्टानिष्टफलदित्सालक्षणमुपायनञ्च भवति ॥

**यथा रथेन धावन् रथचक्रे पर्यवेक्षते, एवमहोरात्रे पर्यवेक्षते । एवं सुकृतदुष्कृते, सर्वाणि च द्वन्द्वानि ॥ ३८ ॥**

यथा रथेन धावन् पुरुषः स्वयं निर्व्यापार एव सन् व्याप्रियमाणरथचक्रादिकं साक्षितया पश्यन् गमनक्रियाजनित शरीरायासादिशून्यस्सन् हृष्टो भवति । एवं प्रवर्तमानकालचक्रं सुकृतदुष्कृत-तत्साध्यद्वन्द्वपरम्परां स्वानन्वितामेव पश्यन् निर्दुःखसुखमास्ते ॥

**स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति ॥ ३९ ॥**

स्पष्टोऽर्थः ॥

**स आगच्छति तिल्यं वृक्षम् ; तं ब्रह्मगन्धः प्रविशति । स आगच्छति सालज्यं संस्थानम् ; तं ब्रह्मरसः प्रविशति । स आगच्छति अपराजितमायतनम् ; तं ब्रह्मतेजः प्रविशति । स आगच्छति इन्द्रप्रजापती द्वारगोपौ ; तावस्मादपद्रवतः । स आगच्छति विभुप्रमितम् ; तं ब्रह्मयशः प्रविशति ॥ ४० ॥**

यथा प्रभाते अनुकलं आदित्यादिसामीप्यातिशयकृतं प्रकाशाधिक्यम् , एवं देशविशेषविशिष्ट-ब्रह्मसान्निध्यातिशयानुकलसमेधमानविकासावस्थाविशेषाः ब्रह्मगन्धब्रह्मरसादिशब्दैरभिलप्यन्ते । ब्रह्मणः

सर्वगन्धत्वादेः, *सर्वगन्धस्सर्वरसः* इति प्रतिपन्नत्वात् यथाश्रुतार्थग्रहणेऽपि न दोषः। **अपद्रवतः** - तस्मै मार्गं प्रयच्छत इत्यर्थः ॥

**स आगच्छति विचक्षणामासन्दीम् ; [1]बृहद्रथन्तरे सामनी पूर्वौ पादौ। श्यैतनौधसे चापरौ पादौ। वैरूपवैराजे शाक्करैवते तिरश्ची[1]। सा प्रज्ञा। प्रज्ञया हि विपश्यति ॥ ४१ ॥**

**सा प्रज्ञा** - प्रज्ञाधिष्ठात्री देवता। तत्संबन्धादयं सर्वं पश्यतीत्यर्थः ॥

**स आगच्छत्यमितौजसं पर्यङ्कम् ; स प्राणः ॥ ४२ ॥**

**प्राणः** - प्राणाभिमानीत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम् ॥

**तस्य भूतं च भविष्यच्च पूर्वौ पादौ। श्रीश्च इरा चापरौ ॥ ४३ ॥**

भूतभविष्यत्कालैश्वर्यान्नाभिमानिदेवताश्चत्वारः पादाः ॥

**बृहद्रथन्तरे अनूच्ये ॥ ४४ ॥**

बृहद्रथन्तराख्ये सामनी अनूचीनदारुणी इत्यर्थः ॥

**भद्रयज्ञायज्ञीये शीर्षण्ये ॥ ४५ ॥**

भद्रयज्ञायज्ञीयाख्ये सामनी तिरश्चीनदारुणी ॥

**ऋचश्च सामानि च प्राचीनाततम् ॥ ४६ ॥**

**प्राचीनाततं** - पर्यङ्कातत दीर्घाः तान्तवरज्जुविशेषाः ॥

**यजूंषि तिरश्चीनानि ॥ ४७ ॥**

तिर्यक्ततरज्जुविशेषाः ॥

---

1. बृहद्रथन्तरे इत्यारभ्य तिरश्ची पर्यन्तं क संज्ञके पुस्तके नास्ति।

**सोमांशव उपस्तरणम् ॥ ४८ ॥**

चन्द्रकिरणा एवाऽऽस्तरणम् ॥

**उद्गीथ उपश्रीः ॥ ४९ ॥**

श्रीसमीपे वर्तमानमास्तरणमुद्गीथः ॥

**श्रीरुपबर्हणम् ॥ ५० ॥**

**उपबर्हणं** - पादोपधानम् ॥

**तस्मिन् ब्रह्मास्ते । तमित्थंवित् पादेनैवाग्र आरोहति । तं ब्रह्माह, कोऽसीति । तं प्रतिब्रूयात् ॥ ५१ ॥**

स्पष्टोऽर्थः ॥

**ऋतुरस्म्यार्तवोऽस्मि ॥ ५२ ॥**

अयञ्च मन्त्रखण्डः प्राग्व्याकृतः ॥

**आकाशाद्योनेः संभूतो भयायैतत् संवत्सरस्य तेजोभूतस्य भूतस्य भूतस्यात्मा त्वमात्माऽसि । यस्त्वमसि सोऽहमस्मीति ॥ ५३ ॥**

**आकाशात् योनेः** - *अथैतमेवाध्वानं पुनर्निवर्तन्ते यथैतमाकाशम् आकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति* (छां.उ. ५-१०-५) इति श्रुत्युक्तरीत्या आकाशवाय्वादिक्रमेणावरुह्य, *योनेश्शरीरम्* (ब्र.सू. ३-१-२७) इति सूत्रोक्तरीत्या योनेस्संभूतोऽस्मि । **भयायैतत्** - एतत् भवनभयं भयहेतुः । **संवत्सरस्य** - संवत्सरे, **तेजोभूतस्य** - रेतोभूतस्य **भूतस्य भूतस्य** - सर्वभूतस्य **त्वमात्मा** - पौनः पुन्येन श्रद्धासोमवृष्ट्यन्नरेतोरूपशरीरयुक्तस्य सर्वस्यापि जीवजातस्य त्वमात्मा । अतश्च प्रकृतिवियुक्तत्वं ब्रह्मात्मकत्वञ्च स्वस्योपन्यस्तं भवति । त्वदात्मकोऽहमियन्तं कालम् ,

*अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् ।*
*मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः ॥* (वि.पु.६-७-१९)

इति न्यायेन संसारे पतितोऽस्मीत्यर्थः ॥

**आत्मासीति ।। ५४ ।।**

मम कथमात्मत्वमित्यत्राह - **आत्मासि** - व्यापकोऽसीत्यर्थः । व्यापकत्वादात्मत्वमुपपद्यत इति भावः ॥

**तमाह कोऽहमस्मीति ।। ५५ ।।**

यस्त्वमसि सोऽहमस्मीत्युक्तम् । अहं वा क इति पृच्छतीत्यर्थः ।।

**सत्यमिति ब्रूयात् ।। ५६ ।।**

उत्तरमाह - **सत्यमिति** ।।

**किं तत् , यत् सत्यमिति ।। ५७ ।।**

पुनः पृच्छति - **किं तत् , यत् सत्यमिति** ।।

**यदन्यत् देवेभ्यश्च प्राणेभ्यश्च, तत् सत् । अथ यत् देवाश्च प्राणाश्च, तत् सत्यम् । तदेतया वाचाऽभिव्याह्रियते सत्यमिति । एतावदिदम् । सर्वमिदम् । सर्वमस्मीत्येवैनं तदाह ।। ५८ ।।**

**[1]तदेतत् श्लोकेनाप्युक्तम् -**

**यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः ।**
**स ब्रह्मेति हि विज्ञेयः ऋषिर्ब्रह्ममयो महान् ।। इति[1] ।**

**सदित्यनेन** देवप्राणव्यतिरिक्तमुच्यते । त्यमित्यनेन देवप्राणाः । अतः **सत्यमित्युक्त्वा** सर्वं संगृहीतं भवति । ततश्च सत्यमस्मीत्युक्ते सर्वमस्मीत्युक्तं स्यादित्यर्थः । ततश्च सर्वेषामात्मैव मदात्मेत्यर्थः ।।

**तमाह - केन मे पौंस्नानि नामान्याप्नोषीति । प्राणेनेति ब्रूयात् । केन स्त्रीनामानीति । वाचेति । केन नपुंसकनामानीति । मनसेति ।। ५९ ।।**

देहेन्द्रियमनःप्राणज्ञानव्यतिरेकं प्रश्नोत्तरव्याजेन स्पष्टयति - नपुंसकत्वादीनि गुणत्रयोन्मेषविशेषरूपाणि ; न तु आत्मस्वरूपगतानि । ततश्च तादृशधर्मयुक्तमनोवाक्प्राण निष्ठान्येव नपुंसकत्वस्त्रीत्वपुंस्त्वानि । अतः

1. क संज्ञके पुस्तके अयं श्लोकः नास्ति ।

तत्संबन्धादात्मनि लिङ्गसंबन्ध इति भावः । प्राणादीनां तृतीयानिर्देशेन करणत्वप्रतीतेः स्वस्य कर्तृत्वप्रतीतेश्च मनोवाक्प्राणव्यतिरेकः सिद्धः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

**केन गन्धानिति घ्राणेनेति ॥ ६० ॥**

घ्राणेन गन्धान् जानामीति ब्रूयादित्यर्थः । एवमुत्तरत्रापि यथायोग्यमन्वयः तत्तदिन्द्रियव्यतिरेकश्च बोध्यः ॥

**केन रूपाणीति । चक्षुषेति । केन शब्दानिति । श्रोत्रेणेति । केन रसानिति । जिह्वयेति । केन कर्माणीति हस्ताभ्यामिति । केन सुखदुःखे इति । शरीरेणेति ॥ ६१ ॥**

*अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः* (छां.उ. ८-१२-१) इति श्रुतेः । वैषयिकसुखदुःखयोः शरीरहेतुकत्वात् शरीरस्य च करणतया निर्देशः ॥

**केनाऽऽनन्दं रतिं प्रजातिमिति । उपस्थेनेति ॥ ६२ ॥**

**प्रजातिः** - प्रजननम् ॥

**केनेत्या इति । पादाभ्यामिति ॥ ६३ ॥**

**इत्याः** - गमनानीत्यर्थः ॥

**केन धियो विज्ञातव्यं कामानिति ॥ ६४ ॥**

ज्ञानविषयान् इच्छाविषयांश्चेत्यर्थः । ज्ञानेच्छादिकं केनाप्नोषीति पर्यवसितोऽर्थः ॥

**प्रज्ञयेति ब्रूयात् ॥ ६५ ॥**

**प्रज्ञया** - मनसेत्यर्थः ॥

**[1]तमाह - आपो वै खलु मे ह्यसावयं ते लोक इति[1] ॥ ६६ ॥**

---

1. **तमाह आपो वै खलु नीयन्ते** - इति कसंज्ञके पुस्तके ।

**लोकः** असौ अमृतस्य आपः भुज्यन्ते । तवाऽप्यसौ लोको भोग्य इत्यर्थः ॥

**सा या ब्रह्मणो जितिः या व्यष्टिः, तां जितिं जयति तां व्यष्टिं व्यश्नुते, य एवं वेद य एवं वेद ॥ ६७ ॥**

**॥ इति प्रथमोऽध्यायः ॥**

अत्र वेदशब्दः उपासनपरः । उक्तपर्यङ्कविद्यानिष्ठो यः, स **जितिं** - जयं **व्यष्टिं** - योगञ्च लभते इत्यर्थः ।

यत्त्वत्र परैः - *पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति* (मुं.उ. ३-१-३) इति श्रुतायां परमसाम्यापत्तौ निरञ्जनस्य गमनासंभवात् परमसाम्यापत्तेः देशान्तरप्राप्त्यनपेक्षत्वाच्च देवयानस्य पथो नार्थवत्त्वम्। आत्मैकत्वदर्शिनाम् आप्तकामानामिहैव दग्धाशेषक्लेशबीजानाम् आरब्धदेहकर्माशय क्षपण-व्यतिरेकेणापेक्षितव्याभावात् । पर्यङ्कविद्यादिषु तु पर्यङ्कारोहणब्रह्मगन्धप्रवेशादीनां विशिष्टदेशान्तरप्राप्तिसापेक्षत्वात् तत्रैव पन्था अपेक्षितः । न हि ग्रामप्राप्तावपेक्षितः पन्थाः आरोग्यप्राप्तावपेक्षितः इति, *गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः*, (ब्र.सू. ३-३-२९) *उपपन्नस्तल्लक्षणार्थोपलब्धेः लोकवत्* (ब्र.सू. ३-३-३०) इति सूत्राभ्यां प्रतिपादितं इति । तथा, *एवमेवास्य परिद्रष्टुः इमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति* (प्रश्न.उ. ६-५) इति श्रुतेः ब्रह्मविदः प्राणानां ब्रह्मण्येव लयः । *गताः कलाः पञ्चदश प्रतिष्ठा* इति कलानां पृथिव्यादिस्वप्रकृतौ लयप्रतिपादनं तु लौकिकदृष्ट्यभिप्रायमिति कलाप्रळयाधिकरणे स्थितम्। सोऽपि कलाप्रलयो निरवशेष इति, *भिद्येते तासां नामरूपे पुरुषे, स एषोऽकलोऽमृतो भवति* (प्रश्न.उ. ६-५) इति, *अविभागो वचनात्* (ब्र.सू. ४-२-१५) इत्यत्र प्रतिपादितम् । अतो न मुक्तस्यार्चिरादिमार्गेण गमनमित्युक्तम् ।

तन्न - तथा सति, *अनियमः सर्वेषामविरोधः* (ब्र.सू. ३-३-३२) इत्यधिकरणे - उपकोसलविद्यायां पञ्चाग्निविद्यायाञ्चार्चिरादिगतेराम्नानात् तद्विद्यानिष्ठानामेवार्चिरादिगतिः ; नान्येषामिति पूर्वपक्षं कृत्वा, *तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते* (छां.उ. ५-१०-१) इति श्रद्धातपश्शब्दलक्षितब्रह्मविद्यान्तर-निष्ठानामप्यर्चिरादिगतिश्रवणात् ,

*शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।*
*एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः* (भ.गी. ८-२६) इति अनुमानशब्दितात्

स्मरणाच्च सर्वविद्यासाधारण्यमाश्रयणीयम् ; उपकोसलविद्यायां पञ्चाग्निविद्यायाञ्च द्विराम्नानस्य उभयत्रानुचिन्तनार्थत्वेनाप्युपपत्तेरिति अर्चिरादिगतेः सर्वविद्यासाधारण्यम् , *अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्* इत्यधिकरणे प्रतिपादितमिति परैरप्युक्तत्वात् तद्विरोधः ।

न च सकलसगुणविद्यासाधारण्यमेवास्मिन् अधिकरणे प्रतिपादितम् ; न तु निर्गुणविद्यासाधारण्यमिति वाच्यम् ; निर्गुणविद्याया एवाप्रामाणिकत्वात् । *स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः तस्मिन् छेते* (बृ.उ. ६-४-२२)इति बृहदारण्यकषष्ठाध्यायगतायाः निर्गुणविद्यात्वेन पराभिमतायाः दहरविद्यायाः छान्दोग्यगत-सगुणविद्यैक्यस्य हृदयायतनत्व सेतुत्वलोकासंभेदहेतुत्वादिसामान्येन, *कामादीतरत्र तत्र चायतनादिभ्यः* (ब्र.सू. ३-३-३८) इत्यधिकरणे सूत्रकृतैव समर्थितत्वात् । परैरपि तथा व्याख्यातत्त्वाच्च । न च निर्गुणायामपि विद्यायां ब्रह्मस्तुत्यर्थमेव सगुणविद्यासंबन्धिगुणोपसंहारः संभवतीति वाच्यम् - निर्गुणस्य परस्य ब्रह्मणो [1]गुणवत्त्वेन[1] अवरब्रह्मत्वेन प्रतिपादनस्य प्रत्युत निन्दात्वेन स्तुतित्वासंभवात् । अत एव *व्यतिहारो विशिंषन्ति हीतरवत्* (ब्र.सू. ३-३-३७) इत्यत्र *तद्योऽहं सोऽसौ योऽसौ सोऽहं त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते* इत्यत्र (ऐ.आर. २-२-४) संसारिण ईश्वरत्वचिन्तने, *ब्रह्मदृष्टिरुत्कर्षात्* (ब्र.सू. ४-१-५) इति न्यायोऽनुगृहीतो भवति । ईश्वरस्य संसार्यात्मत्वचिन्तने निकर्षः प्रसज्येत । अतो द्विरूपामतिर्न कर्तव्येति पूर्वपक्षं कृत्वा, *आम्नानबलात् द्विरूपाऽपि मतिः कर्तव्या । नन्वेवमुत्कृष्टस्यापि निकर्षप्रसङ्ग इत्युक्तम् । तत् किमिदानीं सगुणे ब्रह्मण्युपास्यमाने तस्य वस्तुतो निर्गुणस्य निकृष्टता भवति ।*

*ननु कस्मैचित् फलाय निर्गुणस्य गुणवत्तया ध्यानमात्रं क्रियते । न तावता तस्य निकृष्टता भवतीति चेत् इहापि व्यतिहारानुचिन्तनमात्रमुपदिश्यते फलाय ; न तु निकृष्टता भवत्युत्कृष्टस्य* इत्येवं निर्गुणस्य सगुणत्वे निकर्षप्रसक्तिं अभ्युपेत्य, वस्तुतो निकर्षो नास्तीति शङ्करभाष्यवाचस्पत्ययोः व्याहतत्वेन निन्दावहस्य गुणकीर्तनस्य स्तुत्यर्थत्वासंभवात् । किञ्च लोके हि स्तुतिर्विधेयरुच्युत्पादनेन सप्रयोजना । न चात्र निर्गुणस्य तज्ज्ञानस्य वा विधेयत्वमस्ति । न वा गुणवत्त्वेन स्तुतेर्निर्गुणप्रतिपत्त्युपयोगोऽस्ति । किञ्च निर्गुणविद्याम्नातवशित्वादिगुणानां न छान्दोग्यगतसगुणविद्यायाम् आध्यानायोपसंहारसंभवः । *यत्र वशित्वादयः श्रूयन्ते, तत्रापि तेषां ध्येयत्वेनाभिधानात् अन्यत्र गतानामपि न ध्येयत्वं संभवति* इति तैरेवोक्तत्वात् । स्तुत्यर्थत्वमपि न संभवति ; सत्यकामत्वादि सामर्थ्यादिव सर्वेश्वरत्वसिद्ध्या स्तुतेः सिद्धत्वेन सत्यकामत्वान्तर्भूत वशित्वकीर्तनेन स्तुतेरसंभवात् । कठवल्लीषु पराभिमतनिर्गुणब्रह्मप्रकरणे, *शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति* (का.उ. ६-१६) इति उत्क्रान्तिगत्योः प्रतिपादनात् । निर्गुणविद्यात्वेन पराभिमतायां भूमविद्यायाम्, *स एकधा भवति त्रिधा भवति* (छां.उ. ७-२६-२) इति अनेकशरीरपरिग्रहश्रवणेन निर्विशेषब्रह्मभावापत्तेरप्रतिपादनात् । न चास्य वाक्यस्य सगुणविद्यासु उत्कर्षः कल्पनीय इति वाच्यम् - *सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः* (छां.उ. ७-२६-२) इति प्राक्प्रस्तुतस्यैव, *स एकधा भवति* इति तच्छब्देन परामर्शेन तथोत्कर्षकल्पने प्रमाणाभावात् । तथा निर्गुणविद्यात्वेन पराभिमतप्रजापतिविद्यायाम्, *एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते* (छां.उ. ८-१२-२) इति शरीरादुत्क्रान्तेः श्रवणात् । न च शरीरात् समुत्थानं शरीरविविक्तात्मसाक्षात्कार इति वाच्यम् - *अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुः अशरीराणि ।*

---

1. गुणवत्तया - क

*यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत* (छां.उ. ८-१२-२) इति दृष्टान्तानुगुण्येनैव दार्ष्टान्तिकेऽप्यर्थस्य वर्णनीयत्वात्। शरीर-विविक्तात्मसाक्षात्कारस्यापदार्थत्वादवाक्यार्थत्वात्। तथा निर्गुणविद्यात्वेनाभिमतसद्विद्यायाम्, *तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये* (छां.उ. ६-१४-२) इति प्रारब्धावसाने ब्रह्मसंपत्तिमुक्त्वा तदुत्तरखण्डे, *यदाऽस्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्* (छां.उ. ६-१५-२) इति ब्रह्मसंपत्त्यर्थतया उत्क्रान्तेः प्रतिपादितत्वाच्च। तथा वाजसनेयके षष्ठे तदभिमतनिर्गुणविद्यायामेव,

*अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव।*

*तेन धीरा उपयन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः॥* (बृ.उ.६-४-८) इति गतिप्रतिपादनाच्च। *समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य* (ब्र.सू.४-२-७) इति विद्वदविदुषोरुत्क्रान्तिसाम्यस्य सूत्रकृता कण्ठत एव प्रतिपादितत्वाच्च अर्चिरादिगतिः सगुणविद्याविषयेत्येतन्न प्रामाणिकानां हृदयमधिरोहति। *कार्यं बादरिरस्य गत्युपपत्तेः* (ब्र.सू. ४-३-६) इति नित्यपरब्रह्मविद एवार्चिरादिगतिरिति बादरिमतस्य, *परं जैमिनिर्मुख्यत्वात्* (ब्र.सू. ४-३-११) इति परब्रह्मोपासकानामर्चिरादिगतिरिति जैमिनिमतापेक्षया प्राङ्निर्दिष्टस्य सिद्धान्तसूत्रत्वायोगात्। *चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः*, (ब्र.सू. ३-१-९) *सुकृतदुष्कृते एवेति तु बादरिः*, (ब्र.सू.३-१-११) *उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः*, (ब्र.सू. १-४-२१) *अवस्थितेरिति काशकृत्स्नः*, (ब्र.सू. १-४-२२) *स्वामिनः फलश्रुतेरित्यात्रेयः*, (ब्र.सू. ३-४-४४) आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते (ब्र.सू. ३-४-४५)इत्यादिषु सर्वत्र पाश्चात्यस्यैव सूत्रकृदभिमतत्वदर्शनेन, *कार्यं बादरिरस्य गत्युपपत्तेः* (ब्र.सू.४-३-६) इति बादरिमतस्य सिद्धान्तसूत्रत्वाभ्युपगमस्यासंगतत्वात्। निर्विशेषब्रह्मभावस्यैव मुक्तिरूपत्वे, *संकल्पादेव तच्छ्रुतेः* (ब्र.सू. ४-४-८) *अभावं बादरिराह ह्येवम्*, (ब्र.सू. ४-४-१०) *भावं जैमिनिर्विकल्पामननात्*, (ब्र.सू. ४-४-१) *द्वादशाहवदुभयविधं बादरायणोतः* (ब्र.सू. ४-४-१२) इत्यादीनाम्, *अनावृत्तिश्शब्दात्* (ब्र.सू. ४-४-२२) इत्यन्तानामर्थशून्यतैव स्यात्। न च, *संकल्पादेव तच्छ्रुतेः* (ब्र.सू. ४-४-८) इति सूत्रे, *इत उपरि सगुणविद्याफलप्रपञ्चः* इति कल्पतरुकारेणोक्तत्वात् सर्वं सगुणविद्याफलभूतावान्तरमुक्तिविषयमिति वाच्यम्। यदि हि मुक्तिद्वैविध्यं सूत्रकृदभिमतं स्यात्, तर्हि, *य आत्मा अपहतपाप्मा* (छां.उ. ८-७-१) इत्यादिमुक्तौ ब्रह्मरूपाविर्भाव वाक्यम् अवान्तरमुक्तिपरम्, *एवं वा अरेऽयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव* ( बृ.उ. ६-५-१३) इति निरस्ताशेषप्रपञ्चबोधात्मकत्वेन स्वेन रूपेण निष्पत्तिप्रतिपादकं वाक्यं तु परममुक्तिपरमिति व्यवस्थायाः सुवचतया व्यावहारिकपारमार्थिकत्वाभ्यां व्यवस्थाप्रतिपादकत्वेन त्वदभिमतस्य *एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः* (ब्र.सू. ४-४-७) इति सूत्रस्यासंगतिप्रसङ्गात्। तथा, *अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः* (छां.उ. ३-१२-१) इति अशरीरत्वप्रतिपादकं वाक्यं परममुक्तिपरम्; *स एकधा भवति त्रिधा भवति* इति शरीरयोग[1]प्रतिपादकं[1] वाक्यमवान्तरमुक्तिपरमिति व्यवस्थाया वक्तुं सुशकत्वेन सत्यामिच्छायां सशरीरत्वम्, अन्यदा अशरीरत्वमिति व्यवस्थाप्रतिपादकत्वेन त्वदभिमतस्य *द्वादशाहवदुभयविधं बादरायणोऽतः इति* सूत्रस्यासंगतिप्रसङ्गात्।

---

1. प्रतिपादकपरं - क

*अत एव चानन्याधिपतिः* (ब्र.सू. ४-४-९) इति सूत्रे, *अत एव - सत्यसङ्कल्पत्वात्* च शब्दोक्तायाः, *स स्वराड्भवति* इति श्रुतेश्चानन्याधिपतिर्मुक्तो भवति ; नास्यान्योऽधिपतिर्भवतीत्यर्थः । इदमपि सगुणोपासनया हिरण्यगर्भं प्राप्तस्य इति यत् परैरुक्तम् - तत् अत्यन्तासंगतम् - तस्य हिरण्यगर्भेश्वररूपाधिपति-सत्त्वेनानन्याधिपतित्वस्य वक्तुमशक्यत्वादित्यलमतिचर्चया । प्रकृतमनुसरामः ॥

**॥ इति प्रथमाध्याय प्रकाशिका ॥**

## द्वितीयोऽध्यायः[१]

[प्राणस्य प्राशस्त्यम् ]

**प्राणो ब्रह्मेति ह स्माह कौषीतकिः । तस्य ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं चक्षुर्गोप्तृ श्रोत्रं संश्रावयितृ वाक् परिवेष्ट्री । स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद, दूतवान् भवति । यश्चक्षुर्गोप्तृ, गोप्तृमान् भवति । यः श्रोत्रं संश्रावयितृ, संश्रावयितृमान् भवति । यो वाचं परिवेष्ट्रीम् परिवेष्ट्रीमान् भवति । तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । एवं हैवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति, य एवं वेद । तस्योपनिषत् न याचेदिति । तद् यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेत्, नाहमतो दत्तमश्नीयामिति । त एवैनमुपमन्त्रयन्ते, ये पुरस्तात् प्रत्याचक्षीरन् एष धर्मोऽयाचतो भवति । अन्नादास्त्वेवैनमुपमन्त्रयन्ते, ददाम त इति ॥ १ ॥**

[प्राणस्य श्रेष्ठता]

**प्राणो ब्रह्मेति ह स्माह पैङ्ग्यः । तस्य ह वा एतस्य प्राणस्य ब्रह्मणो वाक् परस्तात् चक्षुरारुन्धे ; चक्षुः परस्ताच्छ्रोत्रमारुन्धे ;, श्रोत्रं परस्तान्मन आरुन्धे ; मनः परस्तात् प्राण आरुन्धे ; तस्मै वा एतस्मै प्राणस्य ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । एवं हैवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति, य एवं वेद । तस्योपनिषत्, न याचेदिति । तद् यथा ग्रामं भिक्षित्वाऽलब्ध्वा उपविशेत् , नाहमतो दत्तमश्नीयामिति, त एवैनमुपमन्त्रयन्ते, ये पुरस्तात् प्रत्याचक्षीरन् । एष धर्मोऽयाचतो भवति, अन्नादास्त्वेवैनमुपमन्त्रयन्ते, ददाम त इति ॥ २ ॥**

[प्राणादिदेवतोद्देश्यक होमाद्यनुष्ठानफलम्]

**अथात एकधनावरोधनम् , यदेकधनमभिध्यायात् , पौर्णमास्यां वाऽमावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्रे एतेषामेकस्मिन् पर्वण्यग्निमुपसमाधाय परिसमूह्य परिस्तीर्य**

---

१. द्वितीयस्याध्यायस्य भाष्याभावात् मूलमात्रं दीयते ।

**स होवाच बालाकिः, 'य एवैष दक्षिणेऽक्षन् पुरुषः तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । नाम्न आत्मा अग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, एतेषां सर्वेषामात्मा भवति' । स होवाच बालाकिः, 'य एवैष सव्येऽक्षन् पुरुषस्तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, एतेषां सर्वेषामात्मा भवति' ।। २१ ।।**

दक्षिणाक्षिप्रतिबिम्बे नामाग्निज्योतिरात्मत्वदृष्टौ नामाग्निज्योतिरात्मत्वं भवति । सव्याक्षिप्रतिबिम्बे सत्यविद्युत्तेज आत्मत्वबुद्धौ सत्यविद्युत्तेज आत्मत्वं भवति ।।

**ततो ह बालाकिस्तूष्णीमास ।। २२ ।।**

उत्तरापरिस्फूर्तेरिति शेषः ।।

**तं होवाचाजातशत्रुः, 'एतावन्नु बालाके' इति ।। २३ ।।**

हे बालाके ! एतावदेव खलु ते विदितमित्यर्थः ।।

**एतावद्धीति होवाच बालाकिः ।। २४ ।।**

एतावदेव मे विदितमित्युवाचेत्यर्थः ।।

**तं होवाचाजातशत्रुः, 'मृषा वै किल मा संवादयिष्ठाः [1]ब्रह्म ते ब्रवाणीति[1]' ।। २५ ।।**

**ब्रह्म ते ब्रवाणीति** मृषोक्त्या मां मृषैव **संवादयिष्ठाः** - संवादं कारितवानसि । एतावन्तं कालमब्रह्मवाद एव प्रवृत्त इत्यर्थः ।।

---

1. **ब्रह्म ते ब्रवाणीति** - इति वाक्यं कसंज्ञके पुस्तके नास्ति ।

**स होवाच, 'यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् कर्म, स वै वेदितव्यः' इति ॥ २६ ॥**

तर्हि किं तत् वेदितव्यं ब्रह्मेत्यत्राह **स होवाच यो वै.....वेदितव्य इति ।** वैशब्दोऽवधारणे। त्वया ब्रह्मत्वेनोपदिष्टानामादित्यादिपुरुषाणां **यः कर्ता** - ते यत्कार्यभूताः ; किं विशिष्याभिधीयते ; यस्य प्रत्यक्षादिसन्निधापितं चिदचिदरूपं समस्तं जगत् **कर्म** - कार्यम् - क्रियत इति व्युत्पत्त्या कर्मशब्दः कार्यवचनः - **स एव वेदितव्यः** ; न तु त्वदुपन्यस्ता आदित्यादय इति भावः ॥

**तत उ ह बालाकिः समित्पाणिः प्रतिचक्राम, उपायानीति ॥ २७ ॥**

उशब्दोऽवधारणे । हशब्दः प्रसिद्धौ । एवमजातशत्रुणोक्तो बालाकिः गताभिमानो, *नीचादप्युत्तमां विद्याम्, आपत्कल्पो ब्राह्मणस्या ब्राह्मणात् विद्योपयोगः* इति शास्त्रमनुसृत्य क्षत्रियादप्यजातशत्रोर्विद्यामुपादित्सुः, *नानुपसन्नाय ब्रह्मोपदेष्टव्यम्* इति शास्त्रं जानन् समिद्भारहस्तः शिष्यस्सन्, उपगच्छामीति प्रववृते ॥

**तं होवाचाजातशत्रुः, 'प्रतिलोमरूपमेव स्यात् यत् क्षत्रियो ब्राह्मणमुपनयेत् । एहि व्येव त्वा ज्ञापयिष्यामीति' ॥ २८ ॥**

*क्षत्रियो ब्राह्मणमुपनयेत्* इति यत्, तत् विपरीतरूपमेव स्यात् । अतः एहि त्वामुपनयनमन्तरेणैव ब्रह्म विज्ञापयिष्याम्येव ॥

**तं ह पाणावभिपद्य प्रवव्राज ॥ २९ ॥**

तं बालाकिं पाणौ गृहीत्वा निर्गत इत्यर्थः ॥

**[सुप्तप्रबोधनम्]**

**तौ ह सुप्तं पुरुषमीयतुः ॥ ३० ॥**

**तौ** - बालाक्यजातशत्रू राजभवने सुप्तं कञ्चित् पुरुषं प्राप्तवन्तावित्यर्थः । बालाक्यधिकरणभाष्ये, *तौ ह सुप्तं पुरुषमाजग्मतुः* (बृ.उ. ४-१-१५) इत्युदाहृतं वाक्यं बृहदारण्यकगतम् ; नैतच्छाखागतम् । अत एव तत्र व्यासार्यैः, *तौ ह सुप्तं पुरुषमीयतुः इति श्रुतिः* इत्युक्तम् ॥

**तं हाजातशत्रुरामन्त्रयाञ्चक्रे, 'बृहन् पाण्डरवासः सोमराजन्निति' ।। ३१ ।।**

*प्राणो वाव ज्येष्ठः श्रेष्ठश्च* (छां.उ. ५-१-१) इति ज्यैष्ठ्यश्रैष्ट्यगुणेन प्राणस्य बृहत्त्वात् बृहन्नित्यामन्त्रणम्। पाण्डरवासस्त्वं च प्राणधर्मः। *किं मे वासः* (बृ.उ. ८-१-१४) इति प्राणेन पृष्टे, *आपो वासः* (बृ.उ. ८-१-१४) इति अपां प्राणवासस्त्वोक्तेः। तासाञ्चापाम्, *यच्छुक्लम्*, *तदपाम्* (छां.उ. ६-४-४) इति शुक्लवर्णाश्रयत्वात् पाण्डरत्वं युक्तम्। सप्तान्नब्राह्मणे, *अथैतस्य प्राणस्याऽऽपः* (बृ.उ. ३-५-१३) शरीरं ज्योतीरूपमसौ चन्द्रः इति प्राणस्य चन्द्रसंबन्धप्रतीतेः लक्षणया **सोमेति** प्राणस्य संबोधनम्। *प्राणो वै सम्राट्* (बृ.उ. ६-१-३) इति श्रवणात् **राज**न्नित्यामन्त्र्यत इति व्यासार्यैरुक्तम्।।

**[1]स उ ह[1] तूष्णीमेव शिश्ये ।। ३२ ।।**

अनुत्थित एव यथापूर्वमशयिष्टेत्यर्थः ।।

**तत उ हैनं यष्ट्या चिक्षेप ।। ३३ ।।**

सुप्तं यष्ट्या ताडितवानित्यर्थः ।।

**स तत एव समुत्तस्थौ ।। ३४ ।।**

दण्डताडनादेव समुत्तस्थौ। न तु प्राणनामामन्त्रणादिना इत्यर्थः। प्राणनामभिरामन्त्रणेऽप्यनुत्थानप्रदर्शनं प्राणान्यत्वज्ञापनार्थम्। सुषुप्तिदशायामुपरतव्यापारेभ्यः शरीरेन्द्रियेभ्योऽन्यत्वं सुज्ञानमपि ; तस्यामपि दशायामनुपरतव्यापारात् प्राणादन्यत्वं ज्ञापनीयमिति। प्राणनामभिरामन्त्रणेऽप्यनुत्थानेन दण्डताडनोत्थानेन च जीवस्य प्राणव्यतिरेको दर्शितः ।।

**[स्वप्नस्थानविषयकप्रश्नः]**

**तं होवाचाजातशत्रुः, क्वैष एतद्बालाके पुरुषोऽशयिष्ट ? क्वैतदभूत् ? कुत एतदागादिति ।। ३५ ।।**

एवं देहेन्द्रियमनःप्राणव्यतिरिक्तं जीवं प्रदर्श्य ततोऽतिरिक्तं परमात्मानं बोधयितुमाह **तं होवाच...**। **हे बालाके ! एष** पुरुषः अशयिष्ट इत्येतत् क्व इति स्वप्नस्थानप्रश्नः। यद्वा, **एतच्छब्दः** स्वप्नपरः।

---

1. स - क ।

**अशयिष्टे**त्येतत् प्रत्ययार्थमात्रपरम्। क्व **एतत्** स्वप्नमकृतेत्यर्थः। सर्वथा स्वप्नस्थानप्रश्नः। **क्व वा एतदभूदिति** सुषुप्तिस्थानप्रश्नः। **एत**च्छब्दस्य नपुंसकलिङ्गत्वेऽपि प्रकृतवाचिप्रकृतिस्वारस्यात् प्रकृतपुरुषशब्दितजीवपरः। ततश्च क्व सुप्तोऽभूद् इत्यर्थः। **कुत एतदागादिति।** अत्राप्येतच्छब्दो जीवपर एव। प्रबोधकालीनजीवोद्गमनापादानं किमित्यर्थः। ततश्च जीवस्य स्वप्नस्थानसुषुप्तिस्थानोद्गमनापादानानि पृष्टानि भवन्ति। यद्वा - त्रिष्वपि प्रश्नेषु **एत**च्छब्दः सप्तम्यन्तः। एतस्मिन् काल इत्यर्थः। *सुपां सुलुक्* (पा.सू. ७-१-३९) इति सुपः लुक्। एतस्मिन् काले क्व स्वप्नमनुभूतम्; एतस्मिन् काले क्व सुप्तः; एतस्मिन् काले कुतो निर्गत इति। एवञ्च त्रयाणामपि **एत**च्छब्दानामैकरूप्यञ्च सिध्यति॥

**तदु ह बालाकिर्न विजज्ञौ ॥ ३६ ॥**

उत्तरं बालाकिर्न ज्ञातवानित्यर्थः॥

**तं होवाचाजातशत्रुः, यत्रैष एतद्बालाके पुरुषोऽशयिष्ट, यत्रैतदभूत्, कुत एतदागात् ॥ ३७ ॥**

**तं होवाचाजातशत्रुः ..... इत्यादि।** उच्यत इति शेषः॥

[स्वप्नविषयकप्रश्नस्य उत्तरम्]

**हिता नाम हृदयस्य नाड्यो हृदयात् पुरीततमभिप्रतिष्टन्ति। यथा (च) सहस्रधा केशस्यापि पातः तावदण्व्यः पिङ्गळस्याणिम्ना तिष्ठन्ते शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति। तासु तदा भवति ॥ ३८ ॥**

स्वप्नस्थानप्रश्नं प्रतिवक्ति हिता ना तदा भवति - आत्मनो हितावहत्वात् हिता इति प्रसिद्धाः हृदयसंबन्धिन्यो नाड्यः **हृदयात् पुरीततं** पुरीतदाख्यं हृदयान्तर्वर्तिमांसपिण्डविशेषमभिप्रस्थिता भवन्ति। हृदये पुरीतति नद्धा भवन्ति। ततश्च यथा केशस्यापि सहस्रधा पातः अतिसूक्ष्मः, **तावदण्व्यः** तथा **अण्व्यः** - सूक्ष्माः पिङ्गळस्य शुक्लस्य कृष्णस्य पीतस्य लोहितस्य अन्नपीतादिरसस्य **अणिम्ना** - लेशेन पूर्णाः तिष्ठन्ति। अतिसूक्ष्मत्वात् लेशेनापि पूर्णाः भवन्ति। **तासु** नाडीषु **तदा** स्वप्नकाले आश्रितो भवतीत्यर्थः॥

[सुषुप्तिविषयकप्रश्नस्य उत्तरम्]

**यदा सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति। तदैनं वाक् सर्वैः नामभिः सहाप्येति; चक्षुः सर्वैः रूपैः सहाप्येति; श्रोत्रं सर्वैः शब्दैः सहाप्येति; मनःसर्वैः ध्यानैः सहाप्येतीति ॥ ३९ ॥**

सुषुप्तिस्थानप्रश्नस्योत्तरमाह यदा **सुप्तः...... सहाप्येतीति । सुप्तः** - वर्तमाने क्तः - स्वपन् सन् यदा उपरतस्वप्नप्रदर्शनो भवति । यदा शब्दानुरोधात् **तदा** शब्दोऽध्याहर्तव्यः - **अथ** स्वप्नानन्तरं अस्मिन् प्राणे प्राणशरीरके परमात्मनि **एकधा भवति ।** एकधाभावो नाम जाग्रदाद्यवस्था-जनितदेहात्माभिमानकृतरागद्वेषादिलक्षणकालुष्यादिराहित्येनावस्थानम् । *सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति* (छां.उ. १-११-५) इत्यादौ **प्राण**शब्दस्य परमात्मनि प्रचुरप्रयोगात् , वाजसनेयके समानप्रकरणे, *य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते* (बृ.उ.६-४-२२) इति **आकाश**शब्दितस्य सुषुप्त्याधारत्वश्रवणाच्च **आकाशप्राण**शब्दयोः परमात्मपरत्वमन्तरेणाविरोधासंभवात् , *सता सोम्य तदा संपन्नो भवति,* (छां.उ. ६-८-१), *सति संपद्य न विदुः,* (छां.उ. ६-९-२) *प्राज्ञेनात्मना संपरिष्वक्तः* (बृ.उ. ६-३-२१) इति परमात्मनः सुषुप्त्याधारत्वस्य श्रुत्यन्तरश्रवणाच्च **प्राण**शब्दो योगेन वा अपर्यवसान वृत्त्या वा ब्रह्मपरः । परमात्मनो बुद्धिस्थत्वात् **अस्मिन्** इति निर्देशोऽप्युपपद्यते । **अथ** - तदुत्तरक्षण एव परमात्मानम् अपियन्तं जीवं वागादीन्द्रियाण्यपि (तत् ) स्वकार्येण सहापियन्तीत्यर्थः । **नाम**शब्दो नामाभिलपनपरः । **रूपशब्द**शब्दौ तज्ज्ञानौपयिकव्यापारपरौ । रूपशब्दादीनां सुषुप्तौ लयासंभवात् । इन्द्रियव्यापारोपरतेरेव **सुषुप्ति** शब्दार्थत्वात् ॥

**[ब्रह्मबोधनम् ]**

**स यदा प्रतिबुध्यते, यथा अग्नेर्विस्फुलिङ्गाः विप्रतिष्ठेरन् , एवमेवैतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते । प्राणेभ्यो देवाः । देवेभ्यो लोकाः ॥ ४० ॥**

उद्गमनापादानप्रश्नस्योत्तरमाह - जीवप्रबोधदशायां अग्नेर्विस्फुलिङ्गा इव एतस्मात् परमात्मनः **प्राण**शब्दिताः जीवाः यथास्थानं प्रस्थिता भवन्ति । तेभ्यश्च **देव**शब्दितानि इन्द्रियाणि, एतेभ्यश्च **लोक**शब्दितानि ज्ञानानि भवन्तीत्यर्थः ॥

**तद्यथा क्षुरः क्षुरधाने अवहितः स्यात् , विश्वम्भरो वा विश्वम्भरकुलाये, एवमेवैष प्राज्ञ आत्मा इदं शरीरमात्मानमनुप्रविष्टः आ लोमभ्यः आ नखेभ्यः ॥ ४१ ॥**

क्षुरो धीयतेऽस्मिन्निति **क्षुरधानं**क्षुरकोशः । तस्मिन् यथा क्षुरः **अवहितः** पिहितप्रविष्टः, - विश्वं बिभर्ति वैश्वानराग्न्यादि रूपेण इति **विश्वंभरो**ऽग्निः - तस्य **कुलाये**[1]नीडे[1] - एवमेवैष परमात्मा इदं पुरोवर्तिशरीरम् आलोमभ्यः आनखेभ्यः । व्याप्त इत्यध्याहारः । व्याप्त्या **आत्मानं** जीवात्मानम**नुप्रविष्टः** अन्तर्यामितयाऽनुप्रविष्ट इत्यर्थः । तादृशस्य सुषुप्त्याधारत्वोद्गमनापादानत्वे संभवत इति भावः । यद्वा इदं

1. नीडे दारुणीति यावत् - क ।

वाक्यं जीवशरीरपरमेव व्याख्येयम् । **आत्मानमिदं शरीरम्** - आत्मत्वेनाभिमन्यमानमिदं शरीरम् आलोमभ्यः आनखेभ्यः जीवरूपेण प्रविष्ट इत्यर्थः ॥

**तमेतमात्मानमेते आत्मानोऽन्ववस्यन्ति ॥ ४२ ॥**

एतादृशं परमात्मानम् इतरे जीवाः **अन्ववस्यन्ति** - अनुवर्तन्ते ॥

**यथा श्रेष्ठिनं स्वाः ॥ ४३ ॥**

तत्र दृष्टान्तमाह **यथा श्रेष्ठिनं स्वाः** । यथा श्रैष्ठ्यवन्तं स्वाः ज्ञातयः अनुवर्तन्ते ॥

**तद् यथा श्रेष्ठी स्वैर्भुङक्ते, यथा श्रेष्ठिनं स्वाः भुञ्जते एवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते । यथा श्रेष्ठी स्वैः, एवं वा एतमात्मानोऽन्ववस्यन्ति ॥ ४४ ॥**

**तद् यथा श्रेष्ठी**....इति । यथा कश्चित् प्रभुः भोगोपकरणभूतैः **स्वैः** ज्ञातिभिः भोगान् भुङ्क्ते यथा **स्वाश्च** बन्धवः तं प्रभुमैश्वर्यादिसमग्रमनुभूय तद्दत्तानि वित्तादीनि चोपजीव्य हृष्यन्ति - एवमेवायं परमात्मा स्वोपकरणभूतैः, जीवात्मभिः लीलारसं भुङ्क्ते । ते चाऽऽत्मानः परमात्मदत्तभोगोपकरणाः सर्वैश्वर्यादिगुणविशिष्टं तमनुभूय हृष्टा भवन्तीत्यर्थः । **यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति इति** पाठे, यथा प्रधानपुरुषः स्वकीयैः भृत्यादिभिः भोगसाधनानि उपहरद्भिः हेतुभिः भोगान् भुङ्क्ते, यथा च भोगसाधनानि उपहरन्तः प्रधानपुरुषं पालयन्ति - एवमित्यर्थः । *भुज पालने* (धा.पा. १४५५) इति भुजेः परस्मैपदित्वादिति ध्येयम् । ईदृशं भोक्तृत्वं जीवद्वारा वा परमात्मनि योजनीयम् ॥

**[बालाकीविद्याफलम् ]**

**स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ, तावदेनमसुरा अभिबभूवुः । स यदा [1]विजज्ञौ[1], अथ हत्वाऽसुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं [2]परीयाय । सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं[2] पर्येति, य एवं वेद । य एवं वेद ॥ ४५ ॥**

**॥ इति चतुर्थोऽध्यायः ॥**

**॥ कौषीतकिब्राह्मणोपनिषत् समाप्ता ॥**

---

**1. विजिज्ञौ** - क ।    **2. परीयाय** - इत्यारभ्य - **आधिपत्यं** पर्यन्तं कसंज्ञके पुस्तके नास्ति ।

इन्द्रो ब्रह्मविद्यालाभात् प्रागसुरैः पीडितः इमां ब्रह्मविद्यां लब्ध्वा असुरहननेन विजयी सर्वदेवाधिपत्यं सर्वदेवश्रैष्ठ्यं स्वाराज्यशब्दिताकर्मवश्यत्वलक्षणं [1]च[1] प्राप। अतोऽन्योऽप्येवं वित् सर्वभूताधिपत्यं सर्वभूतश्रैष्ठ्यं पापाहतिपूर्वकमकर्मवश्यत्वलक्षणं **स्वाराज्य**शब्दितं मोक्षञ्च प्राप्नोतीत्यर्थः।

**[जगद्वाचित्वाधिकरणविचारः]**

**व्यासार्यैस्तु - *सर्वान् पाप्मनोऽपहत्य*** - इत्यनेनापहतपाप्मत्वादिगुणाष्टकमुक्तम्; जरादीनामपि पाप्मान्तर्गतत्वात्। उक्तं हि वाक्यकारैः, *स्युः पाप्मानः कालजरामृत्युशोकादयः संख्यातत्वात्* इति। **स्वाराज्यम्** - स्वाधीनत्वम्। अतः सत्यकामत्वं सत्यसंकल्पत्वञ्चोक्तं भवति। अतः स्वाराज्यं संसारिभ्योऽस्य श्रैष्ठ्यरूपम् **आधिपत्यम्। अधिपतिः** - परमात्मा; *सर्वस्याधिपतिः* (बृ.उ. ६-४-२२) इति श्रुतेः। तत्संबन्धि **आधिपत्यम्।** गुणाष्टकं हि ब्रह्मसंबन्धितया ब्राह्ममुच्यते, *ब्राह्मेण जैमिनिः* (ब्र.सू. ४-४-५) इति। अतो ब्रह्मसंबन्धितया तत्साधर्म्यरूपं संसारिभ्यः श्रेष्ठतारूपं यत् स्वाराज्यम्, तदेतीति श्रुतेरर्थः इत्युक्तम्। अन्योऽपि य एतामुपनिषदं वेद, सोऽपि ईदृशं फलमाप्नोतीत्यर्थः॥

एतत् प्रकरणं समन्वयाध्याये चतुर्थपादे चिन्तितम्। तत्र हि - *यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः* इत्यत्र आदित्यादिपुरुषाणां कर्ता, तत्कर्तृत्वनिर्वाहकञ्च पुण्यपापादिलक्षणं च कर्म यस्यास्ति, स वेदितव्य इत्यर्थप्रतीतेः, **कर्म**शब्दस्य पुण्यपापयोः रूढत्वात्, सुप्तपुरुषागमनयष्टिघातोत्थापनादीनाञ्च जीवलिङ्गत्वात्, *तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते* इति वाक्यप्रतिपाद्यभोक्तृत्वपरिपाल्यत्वयोर्जीव एव संभवात् जीव एव प्रकरणप्रतिपाद्य इति प्राप्ते - उच्यते, *जगद्वाचित्वात्* (ब्र.सू. १-४-१६)। *यस्य वैतत्कर्म* इत्यत्र **कर्म**शब्दस्य यद्यपि पुण्यपापादौ रूढिरस्ति - तथापि चलनेऽपि रूढ्यविशेषेण रूढ्योः परस्परकलहायमानत्वेनार्थनिर्णयासामर्थ्यात्, **एतच्छ**ब्दस्य प्रत्यक्षादिसंनिधापितजगत्परत्वौचित्येन तत्समानाधिकृतकर्मशब्दस्यापि, क्रियत इति कर्मेति व्युत्पत्त्या जगद्वचनत्वमेवोचितम्। ततश्चायमर्थः - त्वदुक्तानामादित्यादिपुरुषाणां यः कर्ता, अन्ततो गत्वा, सर्वमपि जगत् यस्य कार्यम्, स एव वेदितव्यः। ततश्च नात्र जीवस्य प्रसक्तिः। यदि हि पुण्यापुण्यलक्षणकर्मसंबन्धी जीवोऽत्र वाक्ये प्रतिपाद्यः स्यात् - तदा आदित्यादिषु पुरुषवादिनं बालाकिमब्रह्मवादित्वेन प्रत्याख्यातवता अजातशत्रुणा स्वयमब्रह्मण उपदेश्यत्वासंभवात्। अतो नायं **कर्म**शब्दः पुण्यपापवचनः अपि तु जगद्वचनः। *जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्* व्याख्यातम् (ब्र.सू. १-४-१७)। यष्टिघातोत्थापनभोक्तृत्वादिजीवलिङ्गात्, *अथास्मिन् प्राण एवैकधा भवति* इति **प्राण**शब्देन प्राणभृतं निर्दिश्य तत्र करणग्रामस्यैकधाभावश्रवणात्, प्राणभृत्त्वस्य जीवलिङ्गत्वाच्च जीव एवात्र प्रतिपाद्यते। न च **प्राण**शब्दस्य मुख्यप्राण एवार्थः; प्राणनामभिरामन्त्रणाश्रवणेन मुख्यप्राणव्यतिरिक्तत्वस्य ज्ञापितत्वेन मुख्यप्राणस्य एतत्प्रकरणप्रतिपाद्यत्वासंभवेन **प्राण**शब्दस्य प्राणसहचरितजीवलक्षकत्वस्यैव युक्तत्वात्। ततश्च

---

1. मोक्षं च - क।

यष्ट्यादिजीवलिङ्गात् **प्राण**शब्दसंकीर्तनाच्च प्राणभृत् जीव एवात्र प्रतिपाद्यत इति चेत् - तत् व्याख्यातम् । प्रतर्दनविद्यायाम् , *यत्र प्रकरणे ब्रह्मलिङ्गानि चिदचिल्लिङ्गानि चोपलभ्यन्ते, तत्र चिदचिल्लिङ्गानां चिदचिच्छरीरकान्वयसंभवात् चेतनाचेतनशरीरकब्रह्मोपासनं विधीयते* इत्युक्तत्वात् । इहानन्यथासिद्धजीवलिङ्गमस्ति चेत् - तच्छरीरकब्रह्मोपासनार्थः तन्मध्यवर्तिजीवोपदेशः । अत्र च प्रकरणे उपक्रम एव, *मृषा वै मा संवादयिष्ठाः* इति अब्रह्मवादप्रत्याख्यानदर्शनात् पापापहति पूर्वकस्वाराज्यरूपब्रह्मविद्यैकान्तफलेनोपसंहारात् प्रकरणस्य ब्रह्मपरत्वेन निश्चितत्वात् मध्ये जीवोपदेशस्तच्छरीरकतया ब्रह्मोपासनार्थ इत्यध्यवसीयत इत्यर्थः । *अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके* (ब्र.सू. १-४-१८) । यष्टिघातेन जीवसंबोधनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमिति **जैमिनि**राचार्यो मन्यते । *कुतः ? प्रश्नव्याख्यानाभ्याम् प्रश्नप्रतिवचनाभ्याम्।* यष्टिघातेनापि जीवप्रतिबोधनानन्तरम् , *क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत् कुत एतदागात्* इति जीवसुषुप्त्याधारप्रश्नस्य, *अथास्मिन् प्राण एवैकधा भवति* इति परमात्मवाचि**प्राण**शब्देन प्रतिवचनदर्शनाच्च जीवातिरिक्त[1]ब्रह्मप्रतिबोधन[1]शेषतयैव जीवोपन्यासः । न तु तस्यैव शेषितया । ननु, *क्वैतदभूत्* इत्येतच्छब्देन न जीवोऽभिधीयते ; येन तत्प्रतिपादनं परमात्मप्रतिपत्तिशेषभूतं स्यात् । अपि तु **एत**च्छब्देन करणजातमभिधीयते। एतत् करणजातं सुषुप्तौ क्व लीनम् ; प्रबोधदशायां कुत उत्थितमिति प्रश्नः - *अथास्मिन् प्राण एवैकधा भवति* इति **प्राण**शब्दनिर्दिष्टे प्राणभृति लय इति प्रतिवचनतात्पर्यञ्च किं न स्यादिति चेत् , तत्राह, *अपि चैवमेके ।* (ब्र.सू. ३-२-१३) । एके - वाजसनेयशाखिनः प्रश्नप्रतिवचनयोः जीवसुषुप्त्याधारविषयत्वं स्पष्टमामनन्ति । *य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्* (बृ.उ. ४-१-१६) इति, *य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते* (बृ.उ. ४-१-१७) इति च अतो जीवप्रतिपादनस्य परमात्मप्रतिपादनशेषत्वात् परमात्मैवात्र प्रकरणे प्रतिपाद्यः ; न जीव इति स्थितम् ॥

क्षेमाय यः करुणाया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

**॥ इति श्रीरङ्गरामानुजमुनीन्द्रविरचिता कौषीतक्युपनिषत्प्रकाशिका समाप्ता ॥**



1. प्रबोधन - क

# अनुबन्धाः

१. मन्त्राणामकारादि सूचनी
२. प्रमाणाकराणामकारादि सूचनी
३. कौषीतक्युपनिषदर्थसंग्रहकारिकाः
४. मन्त्रगताः विशेषशब्दार्थाः
५. भाष्यकारचारितम्
६. सङ्केताक्षरसूचनी
७. ग्रन्थसूचनी

# १. मन्त्राणामकारादिसूचनी


अथ खलु प्राणः ३-१६
अथ खलु यथा ३-४६
अथ प्रोष्याऽऽयन् २-११
अथ पौर्णमास्यां २-९
अथ मासि मासि २-८
अथ संवेश्यन् २-१०
अथात एकधनावरोधनम् २-३
अथातो दैवः परिमरः २-१२
अथातो दैवः स्मरः २-४
अथातो निःश्रेयसादानम् २-१४
अथातः पितापुत्रीयम् २-१५
अथातः संयमनं २-५
अथातः सर्वजितः २-७
अथो खल्विन्द्रः ३-६
अन्यत्र मे मनः ३-५५
अपराजितमायतनम् १-२६
अमितौजाः पर्यङ्कः १-३०
अरुन्मुखान् यतीन् ३-१०
अवरो वै तर्हि ३-५
अस्ति त्वेव प्राणानां ३-२३
आकाशाद्योनेः १-५३
आत्मासीति १-५४
आयुः प्राणः ३-१५
इति ह माऽप्राक्षीत् १-५
इत्यधिदैवतम्। अथाध्यात्मम् ४-१४
इन्द्रप्रजापती द्वारगोपौ १-२७
उक्थं ब्रह्मेति ह २-६
उद्गीथ उपश्रीः २-४९
ऋतुरस्म्यार्तवोऽस्मि १-५२
एकभूयं वै प्राणा ३-२०
एतद्विज्ञानम् ३-३६
एतद्वै ब्रह्म दीप्यते १-१३
एतद्वै स्वर्गस्य लोकस्य १-११
एतावद्धीति होवाच ४-२४
एष लोकपाल ३-६६
एष ह्येवैनं साधु ३-६४
एष ह्येवैनमसाधु ३-६५
किं तत् १-५७
केनेत्या इति १-६३
केन गन्धानिति १-६०
केन धियो १-६४
केन रूपाणीति १-६१
गार्ग्यो ह वै ४-१
घ्राणोऽस्मात् सर्वान् ३-४३
घ्राणमेवास्या एकम् ३-४७
चक्षुः पश्यत् सर्वे ३-२२
चक्षुरस्मात् सर्वाणि ३-४४
चक्षुः सर्वै रूपैः ३-३२
चित्रो ह वै १-१
जीवति चक्षुरपेतः ३-२५
जीवति वागपेतः ३-२४
तं पञ्च शतान्यप्सरसां १-३४
तं ब्रह्माह - अभिधावत १-३३
तं यः प्रत्याह १-१२

तं ह पाणावभिपद्य ४-२९
तं हाजातशत्रुः ४-३१
तं हासीनं पप्रच्छ १-३
तं होवाच ब्रह्मार्घ्योऽसि १-८
तं हेन्द्र उवाच ३-२
तं हेन्द्र उवाच ३-४
तमेतमात्मानमेते ४-४२
तं होवाचाजातशत्रुः ४-६
तं होवाचाजातशत्रुः ४-२३
तं होवाचाजातशत्रुः ४-२५
तं होवाचाजातशत्रुः ४-२८
तं होवाचाजातशत्रुः ४-३५
तं होवाचाजातशत्रुः ४-३७
तत उ ह ४-२७
तत उ हैनं ४-३३
ततो ह बालाकिः ४-२२
तदु ह बालाकिः ४-३६
तदैनं वाक् सर्वैर्नामभिः ३-३१
तदैनं वाक् सर्वैर्नामभिः ३-३९
तद्धैक आहुः ३-१८
तद्यथा क्षुरः ४-४१
तद्यथा रथस्यारेषु ३-६१
तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते ४-४४
तन्मा ऋतवो १-१८
तमतिसृजते १-२०
तेन सत्येन १-१९
तस्मादेतदेवोक्थमुपासीत ३-२७
तस्यैषैव दृष्टिः ३-२९
तस्यैषैव सिद्धिः ३-३५
तस्यैषैव दृष्टिः ३-३७
तस्य भूतं च १-४३
तस्य मे तत्र न ३-१२
तस्य हवा एतस्य १-२२
तेषां प्राणैः १-१०
तस्मिन् ब्रह्मास्ते १-५१
तमाह कोऽहमस्मीति १-५५
तमाह केन मे १-५९
तमाह - आपो वै खलु १-६६
तिल्यो वृक्षः १-२४
तौ ह सुप्तं ४-३०
त्रिशीर्षाणं त्वाष्ट्रमहनम् ३-९
द्वादशत्रयोदशेन १-१७
न गन्धं विजिज्ञासीत ३-५९
न प्रज्ञातव्यं प्रज्ञायेत ३-५७
न वाचं विजिज्ञासीत ३-५८
न शब्दं विजिज्ञासीत ३-६०
न हि कश्चन ३-१९
न हि प्रज्ञापेता ३-५४
न हि प्रज्ञापेतो ३-५६
पादावेवास्या एकमङ्गमुदूढम् ३-४८
पुंसि कर्तरि मेरयध्वम् १-१५
प्रज्ञैवास्या एकमङ्गमुदूढम् ३-४९
प्रज्ञया घ्राणं समारुह्य ३-५१
प्रज्ञया चक्षुः समारुह्य ३-५२
प्रज्ञयेति ब्रूयात् १-६५
प्रज्ञया वाचं समारुह्य ३-५०
प्रज्ञया श्रोत्रं समारुह्य ३-५३
प्रज्ञया सत्यं संकल्पमेति ३-१६

प्रतर्दनो ह वै ३-१
प्राणो ब्रह्मेति ह २-१
प्राणो ब्रह्मेति ह १-२
प्रिया च मानसी १-३१
बह्वीः सन्धा अतिक्रम्य ३-११
बृहद्रथन्तरे अनूच्ये १-४४
ब्रह्म ते ब्रुवाणीति ४-४
भद्रयज्ञायज्ञीये १-४५
यतो वै च १-३२
यो वै प्राणः सा ३-२८
यो वै प्राणः सा ३-४५
यजूंषि तिरश्चीनानि १-४७
यत्रैतत्पुरुष आर्तः ३-३८
यत्रैतत्पुरुषः सुप्तः ३-३०
यथाऽग्नेः विस्फुलिङ्गा ३-४०
यथाकर्म यथाविद्यम् १-१३
यथा रथेन धावन् १-३८
यथा श्रेष्ठिनं स्वाः ४-४३
यदन्यत् देवेभ्यश्च २-५८
यदा सुप्तः स्वप्नं ४-३९
वाचं वदन्तीं सर्वे ३-२१
वाचा सर्वाणि नामानि ३-४२
विचक्षणा आसन्दी १-२९
विचक्षणादृतवो १-१४
विभुप्रमितम् १-२८
विरजा नदी १-२३
श्रीरुपबर्हणम् १-५०
श्रोत्रं सर्वैः शब्दैः ३-३३
स होवाच प्राणोऽस्मि ३-१४
स आगच्छति तिल्यम् १-४०
स आगच्छति विरजाम् १-३७
स आगच्छति विचक्षणाम् १-४१
स आगच्छति मुहूर्तान् १-३६
स आगच्छत्यमितौजसं १-४२
स आगच्छत्यरं ह्रदम् १-३५
स एतं देवयानं १-२१
स एष प्राणः ३-६
स एष विसुकृतः १-३९
स जायमुपजायमानः १-१६
स तत एव ४-३४
स तूष्णीमेव शिश्ये ४-३२
सत्यं हीन्द्रः ३-७
सत्यमिति ब्रूयात् १-५६
स न साधुना ३-६३
स म आत्मेति ३-६७
स यदाऽस्माच्छरीरात् ३-४१
स यदा प्रतिबुध्यते ३-३४
स यदा प्रतिबुध्यते ४-४०
स यावद्ध वा ४-४५
स यो मां ३-१३
स यो मामायुः ३-१७
स - यो हैतमेवम् ४-७
स ह - पुत्रं १-२
स होवाच, अहम् १-६
स हाजातशत्रुं ४-३
स होवाच, नाहमेतत् १-४
स होवाच प्रतर्दनः ३-३
स होवाच बालाकिः ४-१८

| | |
|---|---|
| स होवाच बालाकिः | ४-५ |
| स होवाच बालाकिः | ४-८ |
| स होवाच बालाकिः | ४-९ |
| स होवाच बालाकिः | ४-१० |
| स होवाच बालाकिः | ४-११ |
| स होवाच बालाकिः | ४-१२ |
| स होवाच बालाकिः | ४-१३ |
| स होवाच बालाकिः | ४-१५ |
| स होवाच बालाकिः | ४-१६ |
| स होवाच बालाकिः | ४-१७ |
| स होवाच बालाकिः | ४-१९ |
| स होवाच बालाकिः | ४-२० |
| स होवाच बालाकिः | ४-२१ |
| स होवाच मामेव | ३-८ |
| स होवाच - ये वै | १-९ |
| स होवाच यो वै | ४-२६ |
| सालज्यं संस्थानं | १-२५ |
| सा या ब्रह्मणः | १-६७ |
| सोमांशव उपस्तरणम् | १-४८ |
| सोऽवसदुशीनरेषु | ४-२ |
| हिता नाम हृदयस्य | ४-३८ |

## २. प्रमाणाकराणामकारादिसूचनी

| **प्रमाणानि** | **आकरः** | **पु.सं.** |
|---|---|---|
| अङ्गाध्याय्यनूचानः | - | ४१ |
| अणुः पन्था विततः | बृ.उ.६.४.८ | २० |
| अत एव चानन्याधिपतिः | ब्र.सू.४.४.९ | २१ |
| अथ य इमे ग्रामे | छां.उ.५.१०.१,३ | ५ |
| अथैतमेवाध्वानं | छां.उ.५.१०.५ | ५,१५ |
| अथैतस्यप्रणस्य | बृ.उ.३.५.१३ | ४८ |
| अनावृत्तिश्शब्दात् | ब्र.सू.४.४.२२ | २० |
| अनियमः सर्वेषामविरोधः | ब्र.सू.३.३.३२ | १८ |
| अनिष्टादिकारिणामपि | ब्र.सू.३.१.१२ | ५ |
| अनेकजन्मसाहस्रीम् | वि.पु.६.७.१९ | १५ |
| अन्यार्थं तु जैमिनिः | ब्र.सू.१.४.१८ | ५३ |
| अन्या वाचो विमुञ्चथ | मु.उ.२.२.५ | ३७ |
| अपराजिता पूः ब्रह्मण | छां.उ.८.५.७ | १० |
| अपि सप्त | ब्र.सू.३.१.१५ | ५ |

| | | |
|---|---|---|
| अभावं बादरिः | ब्र.सू.४.४.१० | २० |
| अयं लोको | कठ.उ.२.६ | ५ |
| अरश्च ह वै | छां.उ.८.५ | १० |
| अवस्थितेरिति काशकृत्स्नः | ब्र.सू.१.४.२२ | २० |
| अविभागो वचनात् | ब्र.सू.४.२.१५ | १८ |
| अशरीरो वायुरभ्रं | छां.उ.८.१२.२ | १९ |
| अशरीरं वाव सन्तं | छां.उ.८.१२.१ | १७,२० |
| अश्व इव ऐमाणि | छां.उ.८.१३.१ | १३ |
| अहं मनुरभवं सूर्यश्च | ऋक्.सं.४.२६.१ | ८,४० |
| आपो वासः | बृ.उ.८.१.१४ | ४८ |
| आर्त्विज्यमित्यौडुलोमिः | बृ.सू.३.४.४५ | २० |
| उत्क्रमिष्यत एवम्भावात् | ब्र.सू.१.४.२१ | २० |
| उपपन्नस्तल्लक्षणार्थः | ब्र.सू.३.३.३० | १२,१८ |
| एवं वा अरेऽयमात्मा | बृ.उ.६.५.१३ | २० |
| एवमप्युपन्यासात् | ब्र.सू.४.४.७ | २० |
| एवमेवास्य परिद्रष्टुः | प्रश्न.उ.६.५ | १८ |
| एष संप्रसादो | छां.उ.८.१२.२ | १९ |
| ओप्यायी वृद्धौ | धा.पा.४८८ | |
| कामादीतरत्र तत्र | ब्र.सू.३.३.३८ | १९ |
| कार्यं बादरिः | ब्र.सू.४.३.६ | २० |
| किं मे वासः | बृ.उ.८.१.१४ | ४८ |
| गतेरर्थवत्त्वम् | ब्र.सू.३.३.२९ | १२,१८ |
| चरणादिति चेन्न | ब्र.सू.३.१.९ | २० |
| छन्दत उभयाविरोधात् | ब्र.सू.३.३.२८ | १२ |
| जगद्वाचित्वात् | ब्र.सू.१.४.१६ | ५२ |
| जीवमुख्यप्राणलिङ्गात् न | ब्र.सू.१.१.३२ | ४१ |
| जीवमुख्यप्राणलिङ्गान्नेति | ब्र.सू.१.४.१७ | ५२ |
| तटितोऽधि वरुणः | ब्र.सू.४.३.३ | ९ |
| तत्पुरुषोऽमानवः | छां.उ.४.१५-५,६ | ९ |

| | | |
|---|---|---|
| तत्रापि तद्व्यापारादविरोधः | ब्र.सू.३.१.१६ | ५ |
| तदधिगम उत्तरपूर्वाघयोः | ब्र.सू.४.१.१३ | १३ |
| तदश्वत्थः सोमसवनः | छां.उ.८.५.३ | १० |
| तद्य इत्थं विदुः | छां.उ.५.१०.१ | ५,१८ |
| तद्य इह रमणीयचरणाः | छां.उ.५.१०.७ | ६ |
| तद्योऽहं सोऽसौ | ऐ.आ.२.२.४ | १९, |
| तस्य तावदेव चिरम् | छां.उ.६.१४.२ | १२,२० |
| तस्य पुत्रा दायम् | (शाट्यायनीयम्) | ५ |
| तानीमानि क्षुद्राणि | छां.उ.५.१०.८ | ५ |
| तृण हिंसायाम् | धा.पा.१४४७ | २८ |
| तृतीयशब्दावरोधः संशोकजस्य | ब्र.सू.३.१.२१ | ६ |
| तेनासौ लोकः | छां.उ.५.१०.८ | ५ |
| तेषां खल्वेषां | छां.उ.६.३.१ | ५ |
| न वक्तुरात्मोपदेशात् | ब्र.सू.१.१.३० | ४० |
| तौ ह सुप्तं | ब्र.उ.४.१.१५ | ४७ |
| दर्शनाच्च | ब्र.सू.३.१.२० | ५ |
| द्वादशाहवदुभयविधं | ब्र.सू.४.४.१२ | २० |
| न तृतीये | ब्र.सू.३.१.१८ | ५ |
| परं जैमिनिः | ब्र.सू.४.३.११ | २० |
| पा-रक्षणे | धा.पा.१०५६ | ३९ |
| पुण्यपापे विधूय | मुं.उ.३.१.३ | १८ |
| प्रभुविमितँ हिरण्मयम् | छां.उ.८.५.७ | ११ |
| प्राज्ञेनात्मना | बृ.उ.६.३.२१ | ५० |
| प्राणो वाव ज्येष्ठः | छा.उ.५.१.१ | ४८ |
| प्राणो वै सम्राट् | बृ.उ.६.१.३ | ४८ |
| प्राणस्तथाऽनुगमात् | ब्र.सू.१.१.२९ | ४० |
| ब्रह्मदृष्टिरुत्कर्षात् | ब्र.सू.४.१.५ | १९ |
| ब्राह्मेण जैमिनिः | ब्र.सू.४.४.५ | ५२ |
| भुजपालने | धा.पा.१४५५ | ५१ |

| | | |
|---|---|---|
| य आत्मा अपहतपाप्मा | छां.उ.८.७.१ | २० |
| य आत्मनि तिष्ठन् | बृ.उ.मा.पा.३.५.७-२२ | ४० |
| य एषोऽन्तर्हृदय | बृ.उ.४.१.१७ | ५०,५३ |
| य एष विज्ञानमयः | बृ.उ.४.१.१६ | ५३ |
| यच्छुकलं तदपां | छां.उ.६.४.४ | ४८ |
| यदाऽस्य वाङ्मनसि | छां.उ.६.१५.२ | २० |
| यदा वै पुरुषः | बृ.उ.७.१०.१ | ९ |
| यावत्संपातमुषित्वा | छां.उ.५.१०-५,६ | ६ |
| यावदधिकारमवस्थितिः | ब्र.सू.३.३.३१ | १३ |
| योनेश्शरीरम् | ब्र.सू.३.१.२७ | १५ |
| योऽयं पवते | - | ४३ |
| विद्याकर्मणोरिति तु | ब्र.सू.३.१.१७ | ५ |
| वृद्धौ च मातापितरौ | म.स्मृ.११.१०.१०/१ | ४० |
| व्यतिहारो विशिंषन्ति | ब्र.सू.३.३.३७ | १९ |
| शतञ्चैका च हृदयस्य | कठ.उ.६.१६ | १९ |
| शास्त्रदृष्ट्या तूपदेशः | ब्र.सू.१.१.३१ | ४० |
| शुक्लकृष्णे गतीह्येते | भ.गी.८.२६ | १८ |
| संकल्पादेव तच्छ्रुतेः | ब्र.सू.४.४.८ | २० |
| संयमने त्वनुभूयेतरेषाम् | ब्र.सू.३.१.१३ | ५ |
| स एकधा भवति | छां.उ.७.२६.२ | १९ |
| स एषः | प्रश्न.उ.६.५ | १८ |
| स वा एष महानज | बृ.उ.६.४.२२ | १९ |
| सच्च त्यच्चाभवत् | तै.उ.आ.६.३ | ४१ |
| सता सोम्य | छां.उ.६.८.१ | ५० |
| सति संपद्य न | छां.उ.६.९.२ | ५० |
| सत्यं ज्ञानमनन्तं ब्रह्म | तै.उ.आ.२.१ | ४१ |
| समाना चासृत्युपक्रमात् | ब्र.सू.४-२-७ | २० |
| सर्वं ह पश्यः पश्यति | छां.उ.७.२६.२ | १९ |
| सर्वस्याधिपतिः | बृ.उ.६.४.२२ | ५२ |

| | | |
|---|---|---|
| सर्वाणि ह वा इमानि | छां.उ.१.११.५ | ५० |
| सर्वे चैते | वि.पु.३.५.७ | ५ |
| सांपराये तर्तव्याभावात् | ब्र.सू.३.३.२७ | १२ |
| सुकृतदुष्कृते एव | ब्र.सू.३.१.११ | २० |
| सुपां सुलुक् | पा.सू.७.१.३९ | ७,४९ |
| सुप्यजातौ | पा.सू.३.५.७८ | ४३ |
| स्थानीयं निगमः | अ.२.२.१ | १० |
| स्मरन्ति च | ब्र.सू.३.१.१४ | ५ |
| स्मर्यतेऽपि च लोके | ब्र.सू.३.१.१९ | ५ |
| स्वामिनः फलश्रुतेः | ब्र.सू.३.४.४४ | २० |


* * *

# ३.कौषीतक्युपनिषदर्थसंग्रहकारिकाः

## (श्री उत्तमूर् वीरराघवाचार्यविरचिताः)

कौषीतकिब्राह्मणोपनिषदृग्वेदसंश्रिता ।
अध्यायेषु चतुर्ष्वत्र प्रथमे प्रतिपाद्यते ॥ १ ॥

पर्यङ्कविद्या यन्निष्ठ इष्टिकृच्चन्द्रलोकभाक् ।
अनुभूय फलं चन्द्रविसृष्टस्तत्त्वभाषणात् ॥ २ ॥

देवयानेन संप्राप्य ब्रह्मलोकमरं ह्रदम् ।
विरजां चातीत्य पञ्चशत्या चाप्सरसां तदा ॥ ३ ॥

प्रत्युद्गतः सोपहारं दिव्यरूपः परिष्कृतः ।
तिल्यवृक्षादिकं प्राप्य क्रमाद् गन्धादिशोभितः ॥ ४ ॥

द्वारपापद्रवादाप्तब्रह्मस्थानोऽमितौजसि ।
पर्यङ्के ब्रह्मणा पृष्टः सत्यवाक् भोगसाम्यभाक् ॥ ५ ॥

मुख्यामुख्यप्राणचिन्ता द्वितीयाध्यायविस्तृता ।
प्रातर्दनी तृतीयेऽन्या परविद्या प्रकीर्तिता ॥ ६ ॥

इन्द्रेण त्वाष्ट्रहत्यादिकर्तृस्वान्तर्गतः परः ।
प्राणस्याप्यन्तरः प्राज्ञः आनन्दश्चाजरामृतः ॥ ७ ॥

सतोऽसतः कारयिता मुक्त्यै यत्रोपदिश्यते ।
तुर्ये बालाकिविद्योक्ता बृहदारण्यके स्थिता ॥ ८ ॥

✦ ✦ ✦

## ४. मन्त्रगताः विशेषशब्दार्थाः

| | |
|---|---|
| **परस्वान् १.१२** | पशुविशेषः। |
| **ब्रह्मार्घ्यः १.८** | ब्रह्मत्वेन - ब्राह्मणत्वेन अर्घ्यः पूज्यः। |
| **पित्र्यावान् १.१४** | पितुः कर्म पित्र्यं निषेकादि। तद्वान्। |
| **यष्टिहाः १.२२** | यष्टिभिः अब्रह्मविदः गन्तॄन् घ्नन्तीति यष्टिहाः। |
| **विरजा १.२३** | जरारजो विरोधित्वात् विजरा विरजा इत्युच्यते। नदी। |
| **सालज्यं १.२५** | सालेषु प्राकारेषु ज्या युद्धसाधनं यस्य तत् सालज्यम्। |
| **अपराजितम् १.२६** | अब्रह्मविद्भिः न जीयते इत्यपराजितम्। |
| **विभुप्रमितम् १.२८** | विभुत्वेन अतिविस्तृतत्वेन प्रमितं हिरण्मयमण्टपम्। |
| **अमितौजाः १.३०** | अमितौजा नाम योगपर्यङ्कः। |
| **फणः १.३४** | भूषणम्। |
| **प्राचीनाततम् १.४६** | पर्यङ्कातता दीर्घाः तान्तवरज्जुविशेषः। |
| **प्रज्ञा १.६५** | मनः। |
| **व्यष्टिः १.६७** | योगः। |
| **उपबर्हणम् १.५०** | पादोपधानम्। |
| **सत् १.५८** | देवप्राणव्यतिरिक्तम्। |
| **त्यम् १.५८** | देवप्राणाः। |
| **प्राणः २.३४** | जीवः। |
| **मोहः २.३८** | मूर्च्छा। |
| **न्येति २.३८** | नितरामेति - (प्राप्नोति) गच्छति। |
| **उदूढं २.४६** | परिगृहीतम्। |
| **प्रजातिः २.४७** | प्रजननम्। |
| **इत्यः २.४८** | गमनम्। |
| **प्रज्ञा २.४९** | मनः। |
| **कामः २.४९** | काम्यमानः। |
| **लोकपालः २.६६** | लोकरक्षकः। |
| **लोकाधिपतिः २.६६** | लोकस्वामी। |
| **सर्वेशः ३.६६** | सर्वनियन्ता। |
| **तेजस्यात्मा ३.८** | तेजस्विस्वरूपः। |
| **संमोहः ३.१७** | मूर्च्छा, मरणं। |

| | |
|---|---|
| **जिष्णुः ३.१२** | जयशीलः। |
| **अपराजिष्णुः ३.१२** | अपराजितः। |
| **इन्द्रः ३.७** | परमात्मा। |
| **त्रिशिरस्कः ३.९** | त्वष्टृपुत्रः विश्वरूपः। |
| **अरुन्मुखः ३.१०** | वेदान्तविमुखः यतिः। |
| **अतृणहः ३-११** | प्रह्लादपुत्रः। |
| **पौलोमः ३.११** | पुलोमसुतः। |
| **कालकञ्जः ३.११** | कालकञ्जाख्यासुरः। |
| **प्रज्ञात्मा ३.१४** | जीवः। जीवशरीरकः। |
| **आयः ३.३१** | लीनः। |
| **रूपं ३.३२** | रूपाज्ञानौपयिकव्यापारः। |
| **ध्यानम् ३.३३** | ध्यानौपयिकव्यापारः। |
| **देवः ३.३४** | इन्द्रियम्। |
| **लोकः ३.३४** | ज्ञानम्। |
| **आबल्यम् ३.३७** | अबलस्य भावं आबल्यम्। बलराहित्यम्। |
| **अन्ववस्यति ३.४२** | अनुवर्तते। |
| **अनूचानः ४.१** | अङ्गाध्यायी। |
| **पाण्डरवासाः ४.६** | पाण्डराणि किरणरूपाणि वासांसि यस्य सः पाण्डरवासाः। |
| **स्तनयित्नुः ४.९** | मेघः। |
| **इन्द्रः ४.११** | ईश्वरः। |
| **प्रतिश्रुत्का ४.१६** | प्रतिध्वनिः |
| **अनपगमः ४.१६** | नापगच्छति इत्यनपगमः। |
| **द्वितीया ४.१६** | आत्मापेक्षया द्वितीया भार्या। |
| **शारीरः पुरुषः ४.१७** | शरीरे अहमित्यभिमन्यमानः पुरुषः शारीरः। |
| **विषासहिः ४.२२** | शत्रुभिः सोढुमशक्यः। |
| **विजज्ञः ४.३६** | ज्ञातवान्। |
| **कुलायः ४.४१** | नीडः। |
| **स्वः ४.४३** | ज्ञातिः। |

❋ ❋ ❋

# ५. भाष्यकारचारित्रम्

**श्रीरङ्गरामानुजमुनिः -**

'चतुष्षष्ठिप्रबन्धनिर्माता, दशोपनिषद्भाष्यकारः', इति अस्य महती प्रशस्तिः। विशिष्टाद्वैतमतरीत्या उपनिषदां भाष्यं अनेन विरचितम् इति अस्य वैभवं निरतिशयम्। जन्मस्थानं तिरुपतिः, लक्ष्मीपुरशाखीयनल्लान् वंश्यः, छन्दोगः, श्रीवत्सगोत्रोद्भवः अयम्। विद्यागुरुः वात्स्य अनन्ताचार्यः, परमगुरुस्तावत् ताताचार्यः। संन्यासदीक्षागुरुस्तावत् श्रीज्ञानाब्धिब्रह्मतन्त्रपरकालमुनिः। पूर्वाश्रमस्य नाम तावत् वरदविष्णवाचार्यः। सोऽयम् आचार्यः केवलं भिक्षाकाले श्रीदेवाधिराजदिव्यालयसन्निधिवीधीं प्रतिगच्छन् अन्यदा श्रीदेशिक-दीपप्रकाशमन्दिरसमीपे आश्रमे वसन् विरचितवेदान्तग्रन्थनिर्माणः महाविरक्त इति वदन्ति। अस्य जीवन कालस्तु १६७०-१७५० इति ज्ञायते। अस्य ग्रन्थेषु अप्पय्यदीक्षितः, दोड्डयाचार्यश्च उल्लेखितः। दीपप्रकाशसन्निधौ ग्रन्थरचनानिर्माणकाले कदाचित् महाचार्यः एतस्य सविधमेत्य 'अहो मकरन्दास्वादमहिमा' इति शश्लाघ इति, तच्छ्रुत्वा 'श्रीमद्भिः मक्षिकासु भर्त्सितासु मकरन्दास्वादे कोऽन्तराय' इत्यनेन प्रत्युक्तमिति किंवदन्ती। एतान् श्लाघितवन्तः दोड्डयाचार्याः न, किन्तु सुरपुरं वेङ्कटाचार्याः इति केचित् वदन्ति।

**अस्य सम्प्रत्युपलभ्यमानाः कृतयस्तावत् -**

१. केन २. कठ ३. प्रश्न ४. मुण्डक ५. माण्डूक्य ६. तैत्तिरीय ७. ऐतरेय ८. छान्दोग्य ९. बृहदारण्यक १०. अथर्वशिखा ११. कौषीतकी १३. श्वेताश्वतर १४. अग्निरहस्यानां भाष्याणि १५. श्रीभाष्याव्याख्या मूलभावप्रकाशिका १६. श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका १७. विषयवाक्यदीपिका १८. शारीरकशास्त्रार्थदीपिका १९. न्यायसिद्धांजनटीका २०. तिरुप्पल्लाण्डु २१. तिरुप्पावै २२. तिरुवाय्मोळि इति द्रमिडप्रबन्धनां संस्कृतानुवादश्च। इमाः मुद्रिताः।

**अमुद्रिताः कृतयः -**

१. कण्णिनुण् शिरुत्ताम्बु व्याख्या २. रामानुजसिद्धान्तसारसङ्ग्रहः ३. पुरुषसूक्तभाष्यम् ४. तत्त्वनिष्कर्षः ५. महोपनिषद्भाष्यम् ६. रहस्यत्रयव्याख्या तात्पर्यकौमुदी ७. प्रतितन्त्रपरिक्रिया ८. ईशावास्यख्याख्या भावदीपिका।

❖ ❖ ❖

## ६. सङ्केताक्षरसूचनी

| | |
|---|---|
| अ.को | अमरकोशः |
| ऋक्.सं | ऋग्वेदसंहिता |
| ऐ.आ | ऐतरेय आरण्यकम् |
| कठ.उ | कठोपनिषद् |
| कौ.उ | कौषीतकी उपनिषद् |
| छां.उ | छान्दोग्योपनिषद् |
| तै.उ.आन | तैत्तरीयोपनिषत् आनन्दवल्ली |
| धा.पा. | धातुपाठः |
| प्रश्न.उ | प्रश्नोपनिषद् |
| बृ.उ. | बृहदारण्यकोपनिषद् |
| बृ.ह.मा.पा. | बृहदारण्यकोपनिषद् माध्यन्दिनपाठः |
| ब्र.सू | ब्रह्मसूत्राणि |
| भ.गी | भगवद्गीता |
| म.स्मृ | मनुस्मृतिः |
| मुं.उ | मुण्डकोपनिषद् |
| वि.पु | विष्णुपुराणम् |



# ७. ग्रन्थसूचनी

## [मूलग्रन्थाः]

**अष्टोत्तरशतोपनिषदः** - आदिकलानिधि प्रेस्; मद्रास् - १८८३, आन्ध्रीलिपिः।

**द्वादशोपनिषदः** - धर्माधिकारीचक्रवर्ति अय्यङ्गार्येण सम्पादितम्। विद्यातरङ्गिणी प्रेस्। मैसूरु - १८९१। आन्ध्री। मद्रास् - १८९६। ग्रन्थलिपिः।

**अष्टोत्तरशतोपनिषदः** - सिद्धान्तिसुब्रह्मण्यशास्त्रिकृतईशावास्यतात्पर्यसङ्ग्रहमहावाक्यरत्नावली च। वाविल्लरामस्वामि एण्ड् सन्स्, मद्रास् १९२८। आन्ध्रीलिपिः।

**अष्टाविंशत्युपनिषदः** - ईशादि - मुक्तिपर्यन्तम्। वा.ल.पत्सीकर् सम्पादितम् निर्णयसागरप्रेस्। बम्बई - १९२८। देवनागरीलिपिः।

**ईशागिविंशदुत्तरशतोपनिषदः** - निर्णयसागर प्रेस्। बम्बई - १९४८।

**अष्टादश-उपनिषदः** - वैदिकवाङ्मयान्तर्गतसमानस्थलनिर्देशैः, अर्थव्याकरणावबोधकटिप्पणीभिश्च सनाथीकृतम्, उपनिषन्मूलम्। वैदिकसंशोधनमण्डलम्; पूना - २,१९५८। देवनागरीलिपिः।

**पंचत्रिंशदुपनिषदः** - ईशीदि - आत्मबोधोपनिषत्पर्यन्तम्। मुम्बई - १९६६।

**उपनिषत्सङ्ग्रहः** - अशीत्यष्टोत्तरशतोपनिषदः। मोतीलाल बनारसीदास। बंग्लोरोड जवाहरनगर, दिल्ली - ७,१९७०,१९८०। देवनागरीलिपिः।

**सिक्स्टि उपनिषत्स् आफ् दि वेद** - बेडेकर वि.एस्.तथा पालसुले जि बि, मोतिलाल बनारसीदास् बंग्लोरोड् - जवाहरनगर - दिल्ली - १९८०।

## [भाष्यग्रन्थाः]

**केनाद्युपनिषत्पुरुषसूक्तश्रीसूक्तभाष्यम्**- श्रीरङ्गरामानुजमुनिवरप्रभृतिपूर्वाचार्यविरचितम्। सम्पादकः - उत्तमूर् ति.वीरराघवाचार्यः टि.वि. सुन्दरं चारिटीस्, मद्रास्, १९७२। देवनागरीलिपिः।

**सुबलाद्युपनिषत्षट्कभाष्यसहितं दशोपनिषद्भाष्यम्** - श्रीमद्रङ्गरामानुजमुनिविरचितभाष्येण युक्तम्। संपादकः व.न.कृष्णमाचार्यः, वैदिकमुद्राक्षरशाला, १९१३। ग्रन्थलिपिः।

**श्वेताश्वतराद्युपनिषद्भाष्यम्** - श्रीरङ्गरामानुजमुनिप्रभृतिपूर्वाचार्यविरचितम्, श्रीतिरुपति देवस्थान-मुद्रणालये मुद्रितम् - १९५५। देवनागरिलिपिः।

❁ ❁ ❁

## पाठभेदार्थं स्वीकृताः ग्रन्थाः सङ्केतश्च

| | | |
|---|---|---|
| **उपनिषद्भाष्यम्** | श्रीरङ्गरामानुजभाष्योपतम्, सम्पादकः व.न.कृष्णमाचार्यः, वैदिकमुद्राक्षरशाला, कुम्भकोणम्, १९१३, ग्रन्थलिपिः । | - **क** |
| **श्वेताश्वतरोपनिषद्भाष्यम्** | श्रीरङ्गरामानुजभाष्योपतम्, सम्पादकः उत्तमूर् ति.वीरराघवाचार्यः टि.टि.डि.देवस्थानम्, तिरुपति १९५५, देवनागरीलिपिः । | - **ख** |
| **केनाद्युपनिषद्भाष्यम्** | श्रीरङ्गरामानुजभाष्योपेतम्, सम्पादकः उत्तमूर् ति.वीरराघवाचार्यः टि.वि.सुन्दरं चार्टीस् मद्रास् १९७२, देवनागरीलिपिः । | - **ग** |

❀ ❀ ❀

# Rāmānuja on Kauṣītakyupaniṣad

There is no reason to belittle the *Kauṣītaki Upaniṣad.* It bears the character of a very old *Upaniṣad* like the *Chāndogya* and the *Bṛhadāraṇyaka.* It has been brought under discussion by the *Brahma- Sūtras* in two sections (I. 1. 29-32 and I. 3. 16). *Śaṅkara, Bhāskara* and *Rāmānuja* agree that these sections of the Sūtras elucidate some basic passages of the *Upaniṣad.* The commentators make use of the *Upaniṣad,* even apart from these two sections of the *Sūtras.* Like all the older Upaniṣads, it also contains material not strictly philosophical. And there seems to be no justifiable reason for not according to this *Upaniṣad* the status of a primary scripture of *Vedānta. Rāmānuja* offers a very substantial interpretation of its philosophical contents.

The first section in the *Brahma - Sūtras* to discuss this *Upaniṣad* takes up a very important chapter (III) of the *Upaniṣad :* and it alone will concern us here. *Rāmānuja* devotes the maximum consideration to it. In intrinsic weight, the chapter is as lofty as any of the best discourses of the *Chāndogya* and the *Bṛhadāraṇyaka.*

Divodāsa's son, Pratardana, does some extraordinarily good deeds. The god Indra to whose world he goes as a reward of merit, is highly pleased with him and offers to give him a fitting boon. Pratardana does not name the boon and prays to Indra to confer himself what he considers to be the highest good of man. If this is rather surprising, Indra's response is still more surprising. He directs Pratardana to direct his devotion to himself, that is, to Indra himself. Then an extraordinary glorification of Indra by Indra himself is recorded. He narrates his own feats that are familiar to students of Vedic mythology. He goes on to describe himself as the fundamental *Prāṇa.* This is no simple breath, but a cosmic principle. Gradually, he advances to a highly metaphysical plane.

Indra describes to superiority of the self in man to the various organs and processes through which he functions. He points out that this self, described as *prajñāmātrā* (subtle intelligence), a truly appropriate designation, is organically related to the material world, described as *bhūtamātrā* (subtle matter). It is not as if there were several *prajñāmātrā* and several *bhūtamātrās* mutually distinct and separate. The *Upaniṣad* says, *"No etan nānā"* (III. 9), that this is not a bare multiplicity. The *bhūtamātrās* are established in the *prajnāmātrās.* That means that the material world rests on the selves in an ultimate way. The *prajnāmātrās,* in their turn, are established in the Supreme *Prāṇa.*

The *Upaniṣads* are fond of using the simile of a wheel for illustrating the formation of an organically united structure out of a multiplicity of factors. But they can show no better use of this simile than what we have here. The outer rim of the wheel rests upon the spokes. Even so do the material elements of existence rest upon the selves. The spokes are held together by the axle. Similarly, the selves are supported and held up by the *prāṇa* (III. 9).

Now the discourse devotes itself to the delineation of the *prāṇa.* This *Prāṇa* is *prajñatmā, ānanda, ajara* and *amṛta (Ibid).* That is, It is of the nature of

supreme consciousness and joy, unaging and immoral. It is beyond the law of *Karma* ; on the contrary, it actuates the agents that come under the law of *karma (Ibid).* This *prāṇa* is He who protects the worlds, rules over the worlds, He is the Lord of all, *Sarveśvara*. Indra says : "He is my *Ātman* and one should meditate of Him as my *Ātman*" (Ibid). This is the substance of the third chapter of the *kauṣītaki.*

Rāmānuja finds this instruction highly contributory to the right formulation of the philosophy of the *Upaniṣads.* That the material universe is subservient to the finite self and the finite selves are based on the Supreme Spirit are magnificent propositions for him. The exact relation of the material universe and the finite selves to the *paramātman* is describable in terms of the body - soul relationship as propounded in the *Antaryāmibrāhmaṇa.* Hence Indra does well in instructing Pratardana to meditate on the Supreme as dwelling in his individual soul. In precisely the same way does Vāmadeva communicate his supreme experience of *Brahman* (Bṛih. Up., I. 4. 10.) Happily the instruction here culminates in the proclamation of the cosmic glories of *Brahman.* There is no suspicion of the impersonal and attributeless Absolute here, no hint of the unreality of the many and intimation of the unity of the *jīva* and *Brahman* except in terms of *Brahman's* immanence in the jīva.

The only anomaly in he discourse is that *Brahman* is not presented as such but is said to be Indra, with the well - known exploits to the credit of that Vedic deity. He is identified with *Prāṇa*, and many of the empirical characteristics of the well - known life - breath are mentioned. How are we to resolve this tangle ? The difficulty of textual interpretation is genuine and the *Sūtrakāra* handles' the problem superbly. Rāmānuja interprets him as maintaining that three types of meditation on *Brahman* are possible.

Sometimes a physical principle may be chosen for focusing attention upon and *Brahman* may be meditated upon as dwelling within that principle. That is the case in the present discourse, as far as it deals with meditation on *Prāṇa.* Sometimes a particular individual self, such as the *jīva* of Indra in the present text, may be made the field of contemplation, and *Brahman* may be worshipped as dwelling in the individual as his Ultimate Soul. Sometimes *Brahman* may be meditated upon apart from these embodiments, in His own intrinsic nature along with His inherent perfections, That is also a distinct manner of devotion.

Hence nothing has gone wrong if Indra directs Pratardana to meditate on *Brahman* as the soul of Indra himself or as the soul of *Prāṇa*. Through the cosmos also there runs a road to the Absolute Reality. But the essential principle is that our devotion to these lower principles must progress beyond them and must reach the Highest as embodied in them. There should be no crude identification of the ostensible object with the real inner object shining through it. This instruction of Indra does itself contain directions for all the three types of meditation on *Brahman.*

---

***(courtesy - Sri Ramanuja on the Upaniṣads by Prof. S.S.Raghavachar, M.A.)***

